चौखम्बा संस्कृत सीरीज

२

****

श्रीमद्भट्टोजीदीक्षितप्रणीतः

# शब्दकौस्तुभः

## तृतीयो भागः

सम्पादकौ

विन्ध्येश्वरीप्रसाद द्विवेदी, गणपतिशास्त्री मोकाटे च



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९९१

CHOWKHAMBA SANSKRIT SERIES

2

****

# ŚABDA KAUSTUBHA

OF

ŚRĪ BHAṬṬOJĪ DĪKSHITA

VOL. III

Edited by

VINDHYEŚWARĪ PRASĀD DVIVEDĪ

and

GAṆAPATI ŚĀSTRĪ MOKĀTE



CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI–221 001

1991

श्रीगणेशाय नमः ।

—:०:—

# शब्दकौस्तुभे

## चतुर्थाध्याये प्रथमे पादे प्रथममाह्निकम् ।

ङ्याप्प्रातिपदिकात् ॥ १ ॥

आ पञ्चमाध्यायसमाप्तेरधिकारोऽयम् । यद्यपि परश्चेत्युक्तेः पूर्वमाक्षिप्यमाणं प्रत्ययार्थान्वययोग्यार्थाभिधाय्येव योग्यतया लभ्यते तथाप्यसत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युः । ततो विशिष्टस्य प्रातिपदिकतायां सकलसुब्लोपे स्पष्टमेवानिष्टम् । वार्त्तिककारस्तु अधिकारफलानि बहूनि पेठुः ॥ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थं वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थमिति । एतच्च सर्वं प्रकारान्तरेणापि सुसाधम् । तथा हि । स्वादिविधेः संख्याकर्मादिवाक्यैरेकवाक्यतया कर्माणि यद्वर्त्तते तस्मादित्यादिक्रमेण प्रकृत्याक्षेपादङ्गभपदसंज्ञाः सिद्धाः । कंसीयपरशव्ययोरपि अवयवस्य भवन् लुक् यच्छयोरेव भविष्यति न तुप्रत्ययसप्रत्यययोः । उगवादिभ्यो यत् प्राक् क्रीताच्छ इतिवत् कमेः सः आङ्परयोः खनिशॄभ्यां डिच्चेति विधिवाक्यसत्त्वे ऽपि उणादयोऽव्युत्पन्नानीत्याश्रयणात् । उणाद्यन्ताः क्वचिद् व्युत्पत्तिकार्यं न लभन्ते इति तदर्थः । एतच्चातः कृकमीति सूत्रे कमिग्रहणेन सिद्धे ऽपि कंसग्रहणाज्ज्

ज्ञापितम् । वृद्धेत्यादि पुनरवशिष्यते । तस्यायम्भावः । वृद्धाच्छ इत्यादौ वृद्धं यन्ङ्याप्प्रातिपदिकं तत्प्रकृतिकात् सुबन्तादित्यर्थलाभायाधिकारः । समासतद्धितप्रकरणे सर्वत्र तत्प्रकृतिके लक्षणेति येन विधिरित्यत्र व्युत्पादितत्वात् । असति त्वधिकारे वृद्धादवृद्धादित्यादीनि सुबन्तस्यैव विशेषणानि स्युरिति ।

अत्रेदं वक्तव्यम् । वृद्धादवृद्धात् अनुदात्तादेरिति त्रयं तावद् भवतु सुबन्तस्य विशेषणम् । तथापि न क्षतिः । न चैवं उदीचां वृद्धादिति फिञ् ज्ञानां ब्राह्मणानामपत्ये स्यात् । ज्ञयोर्ब्राह्मणयोरपत्ये न स्यात् । तथा प्राचामवृद्धादिति फिन् ज्ञयोर्ब्राह्मण्योरपत्ये स्यात् । ज्ञानां ब्राह्मणानामपत्ये न स्यात् । तथा अनुदात्तादेरञ् सर्वस्य विकार इत्यत्र न स्यात् । प्रातिपदिकस्य गणपाठेऽन्तोदात्ते निपातनेऽपि सर्वस्य सुपीति सुबन्तस्याद्युदात्तत्वात् । पञ्चानां विकार इत्यत्र तु अञ् स्यात् । षट्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वादिति वाच्यम् । अन्तरङ्गानपीति न्यायेन तद्धितोत्पत्तेः सुब्लुकश्च प्रागन्तरङ्गाणामपि सुप्कार्याणामप्रवृत्तेश्च । अन्यथा गोमत्प्रिय इत्यत्र नुम्दीर्घौ स्याताम् । तत्तत्तामसेत्यादौ च सविभक्तिकस्य स्थाने द्विर्वचने विभक्तिसम्प्रमोहे च ते ते तामसेति स्यात् । न च सौत्थितिर्वैक्षमाणिरित्यादिसिद्धये वक्ष्यमाणरीत्या समर्थानां प्रथमादिति सूत्रस्थं समर्थग्रहणं कृतवर्णानुपूर्वीकस्य प्रकृतित्वं गमयतीति वाच्यम् । तस्य सुप्प्रकृतिभागमात्रपरत्वात् । अन्यथा दण्डिमानित्यादौ इनो दीर्घापत्तेरिति दिक् । अत एवात इञ् दक्षस्यापत्यमित्यत्रैव स्यात् । दक्षयोर्दक्षाणां वा अपत्यमित्यत्र न स्यादित्यपास्तम् । सुप्कार्याणां दुर्लभ-

त्वात् षष्ठ्या अवर्णान्तत्वासम्भवे स्थिते अवर्णान्तप्रकृतिकता-
लक्षणायाः सम्भवात् । सिद्धान्ते ऽपि तदावश्यकत्वाच्च ।
एवं नौद्व्यचष्ठन्नित्यादावपि द्व्यच्प्रकृतिके लक्षणा बोध्या । नौ-
ग्रहणाज्ज्ञापकात् । तेन वाचा तरतीत्यादौ ठन्नादयो नेति दिक् ।

नन्वस्तु उक्तरीत्या वाक्यात् कप्रत्ययादिनिवृत्तये प्रातिप-
दिकग्रहणम् । ङ्याब्ग्रहणं तु मास्तु । कथं तर्हि ङ्यावन्ता-
दिभ्यो विधिरिति चेत् लिङ्गविशिष्टपरिभाषयेत्यवेहि सा हि
यथाकथञ्चित् प्रातिपदिकग्रहणे प्रवर्त्तते इति भाष्यमतम् । अत
एव यामिनयन्त्यहानीत्यादौ क्विप् । वृत्तौ तु यद्यपीह सूत्रे
विशिष्टरूपोपादानविषयत्वं परिभाषाया उक्तं तथापि रो रीति
सूत्रे सामान्यविषयतैवाश्रिता । समर्थिता च हरदत्तेन । इयं च
परिभाषा युवा खलतीति सूत्रे कुमारः श्रमणादिभिरित्यत्र वा
ज्ञाप्यत इत्युक्तम् । तदीयप्रयोजनानि तु बहूनि । तथाहि । स-
र्वनाम्नस्तृतीया च यथेह भवति भवतो हेतोरिति तथा भव-
त्येत्यत्रापि । कुसूलकूपकुम्भशालं बिले । कुसूलबिलमि-
त्यत्रेव कुसूलीबिलमित्यत्रापि पूर्वपदान्तोदात्तत्वं भवति ।
मातृसदृशी इह पूर्वसदृशेति समासः सदृशप्रतिरूपयोरिति स्व-
रश्च भवति । अयस्कुम्भी । अतः कृकमीति सत्वम् । कुमारी-
माचष्टे कुमारयति । णाविष्ठवदिति टिलोपः । एवं यामिनी-
वाचरन्ति यामिनयन्त्यहानीत्यत्र क्विबपि फलम् । शक्तिला-
ङ्गलाङ्कुशेत्यत्र घटघटीग्रहणादनित्येयम् । तेन मद्राणां राज्ञी
मद्रराज्ञी । राजाहः सखिभ्य इति टज् नेति दिक् । यत्तु युवोर-
नाकाविति सूत्रे विभक्तौ लिङ्गविशिष्टाग्रहणमिति भाष्ये उक्तं
तदप्येतेन गतार्थं सखी सख्यावित्यादावनङ्णित्वाद्यभाव-
स्योक्तरीत्यैव सिद्धेरित्यवधेयम् । एवं स्थिते प्रकृतसूत्रे ङ्या-

ब्ग्रहणं व्यर्थमिति चेदुच्यते । लोहिनिकार्यकयोः सिद्ध्यै तत् । तथा हि । स्वार्थिकत्वेनान्तरङ्गः परश्च लोहितान्मणाविति कन् ङीषं बाधेत । ततश्च लोहितिकेत्येव स्यात् । इष्यते तूभयम् । ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात् कनि रूपद्वयं सिद्धम् । वर्णादनुदात्तादिति नत्वस्य वैकल्पिकत्वात् । तथा च लो-हितालिङ्गबाधनं वेति नारम्भणीयम् । आर्यशब्दात्तु न सामिवचन इत्यत्र ज्ञापयिष्यमाणो ऽन्यन्तस्वार्थिको ऽपि कन् आब्ग्रहणसामर्थ्यात् पूर्वं न प्रवर्त्तते । तेनोदीचामातः स्थाने यकपूर्वाया इतीत्वविकल्पः सिद्ध्यति ।

स्यादेतत् । एवं सति बहुगोमत्का न स्यात् । ब-हुगोमच्छब्दात् कपः प्रागुगिल्लक्षणङीप्प्रसङ्गात् । मैवम् । अकृत एव समासे अलौकिकप्रक्रियावाक्य एव उत्त-रपदस्यावयवीभूय समासान्तः प्रवर्त्तत इति वक्ष्यमा-णत्वात् । स च विभक्तेः पुरस्तादित्येके । परस्ताद-ति पक्षे तु तद्धितान्तत्वात् सुब्लुकि पुनः सुपि चाकृते समास इति सिद्धान्तः । तस्मादन्तरङ्गताद्धितबाधनार्थं ङ्याब्ग्रह-णमिति स्थितम् । युवतितरेत्यत्र तु तिप्रत्यय एवान्तरङ्गः । कृते तु तस्मिन् तरप् । पुंवद्भावस्तु तसिलादिष्विति प्राप्तो ऽपि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वेन बाध्यते । आह च । पुंवद्भा-वाद्ध्रस्वत्वं खिद्घ्यादिकेष्विति केचित् तन्न । युवतिशब्दस्या-ङ्यन्तत्वेन ह्रस्वाप्राप्तेः । तस्माद् भाष्यप्रयोगादेवेह न पुंवदिति तत्वम् । जातेश्चेति पुंवद्भावप्रतिषेध इति तु न युक्तम् । यौवनस्यानित्यतया अजातित्वात् । अन्यथा युवजानिरिति न सिद्ध्येत् ॥ १ ॥

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङ-

सोसाम्ङ्योःसुप् ॥ २ ॥

ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्ययाःस्युः। गौरी। राज्ञी। शार्ङ्गरवी खट्वा। सीमा। कारीषगन्ध्या। रामः। प्रथमैकवचने उकार एतत्तदोः सुलोप इत्यत्रोच्चारणार्थः। केवलव्यञ्जनस्य तत्रोच्चारणं तु क्लिष्टं स्यात्। अर्वणस्त्रसावित्यत्र विशेषणार्थो वा। असीत्युक्ते हि असकारादावित्यर्थः स्यात्। तथा च वाजमर्वत्सु पयउस्त्रियास्विति न सिद्ध्येत्। अनङ् सावित्यादौ विशेषणार्थस्तु न। सीत्युक्तेऽपि सर्वनामस्थानग्रहणानुवृत्त्याऽभिमतसिद्धेः ॥ २ ॥

स्त्रियाम् ॥ ३ ॥

अधिकारोऽयम्। स्त्रीत्वं च टाबादीनां द्योत्यं वाच्यं वेति पक्षद्वयमपि भाष्ये स्थितम्। यदत्र वक्तव्यं तत् सरूपसूत्रे एवोक्तम् ॥ ३ ॥

अजाद्यतष्टाप् ॥ ४ ॥

अजादीनामकारान्तस्य च यत् स्त्रीत्वं तत्र टाप् स्यात्। तदीयार्थसमवेतत्वं षष्ठ्यर्थः। सन्निधानात् प्रकृतिताऽपि तस्यैव बोध्या। यद्वा। शब्दस्याप्यर्थविशेषणतया भानादश्वाशब्दापेक्षया तुरगीशब्दस्यार्थभेदादतिप्रसङ्गशङ्कैव नास्ति। अजादिग्रहणं ङीषो ङीपश्च बाधनाय। टापः पकारः स्वरार्थः। याडाप इत्यादौ सामान्यग्रहणार्थश्च। तदविघातार्थष्टकारः। वामदेवाड्ड्यड्ड्यावित्यत्र हि तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभाषा ज्ञापयिष्यते। अजा। अतः। खट्वा। अजादिभिः स्त्रीत्वस्य विशेषणान्नेह। पञ्चाजी। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम्। अजहत्स्वार्थायां समाहारो ऽप्य-

जात्यर्थ एवेति चेन्न। तथापि तस्य पदान्तरसमभिव्याहारसापेक्षतया बहिरङ्गत्वात् । टाब्विधेस्तु अन्तरङ्गे चरितार्थत्वात् । परमाजेति तर्हि कथमिति चेत् । प्रागुत्पन्नस्यैव तत्र श्रवणादित्यवेहि । अन्यथा निरजेति तु अदन्तप्रयुक्तष्टाप् । न च पञ्चाजीत्यादावपि तथाऽस्त्विति वाच्यम् । द्विगोरिति ङीपा बाधितत्वात् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो ङीप् प्राप्तः । वृश्चिकृषोः किकिन्नित्यधिकारे मुषेर्दीर्घश्चेति किकिनि इकारमध्यो मूषिकः। यस्तु मूष स्तेये इति दीर्घोपधात् संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततो ऽप्ययं टाप् । प्रत्ययस्थादितीत्वमिति तु विशेषः । व्याघ्रीतिवत् संज्ञात्वेऽपि जातित्वानपायान् ङीष्प्राप्तिरवधेया । बाला । वत्सा । होडा । मन्दा । विलाता । एषु वयसि प्रथम इति ङीप्प्राप्तः । पूर्वापहाणा । अपरापहाणा । अण्णन्तः । निपातनाण्णत्वम् । “( सम्भस्त्राजिनशणपिण्डेभ्यः फलात् )”। संफला । भस्त्रफला । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः । एतच्च फल निष्पत्ताविति धातौ माधवग्रन्थे स्थितं भाष्ये तु दीर्घ एव प्रायशः पठ्यते । सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् । पाककर्णेत्यादिसूत्रस्थभाष्यवार्त्तिकपर्यालोचनयेह प्राक्शब्दान्तर्गतः प्रशब्दो न पाठ्यः । सदच्काण्डेति तत्र पाठात् । प्राक्पुष्पा । प्रत्यक्पुष्पा इत्युदाहरणाच्च । इह “शूद्रा चामहत्पूर्वा जातिरिति पठ्यते । अस्यार्थः । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् महत्पूर्वस्तु न जातिश्चेदित्यनुषङ्गः । शूद्रा । जातिः । पुंयोगे तु शूद्री ।

कथं तर्हि वैश्याशूद्र्योश्च राजन्यान्माहिष्योग्रौ सुतौ स्मृताविति उच्यते । अस्तीहापि जन्यजनकभावः पुंयोगः । न

हि तत्र दम्पतिभाव एव गृह्यते इति तत्रैव स्फुटीकरिष्यते । अत्रेदमवधेयम् । अजादिगणे शूद्रेत्येव पाठ्यम् । इतरत् सर्वं व्यर्थम् । तथाहि । मुख्ये कार्यसंप्रत्ययाज्जातिलक्षणो ङी-षेव बाधिष्यते । पुंयोगे हि गौणी वृत्तिः । महाशूद्रशब्दस्तु वि-शिष्ट एव जात्यन्तरपरः । आभीरी तु महाशूद्री जातिपुंयोगयोः समेत्यमरकोशात् । तत्र गौरखरादिवत् कथं चिदसताऽप्यव-यवार्थेन व्युत्पादनमस्तु । शूद्रशब्दार्थसमवेतस्त्रीत्वाभावात्तु टापः प्रसङ्ग एव नास्ति । या तु महती शूद्रा तत्र महाशूद्रेतीष्यत एव । अत एवायं निषेधस्तदन्तविधिज्ञापक इत्यपि शिथिल-मूलम् । इष्यमाणस्तु तदन्तविधिर्विशेषणविशेष्यभाववैपरीत्येन सुलभः । अनुपसर्जनादिति ज्ञापकाद्वेति दिक् ॥ कुञ्चा । उ-ष्णिहा । देवविशा । हलन्ता एते इत्येके । ज्येष्ठा कनिष्ठा म-ध्यमेति पुंयोगेऽपि । कोकिला जातावपि ॥ “ (मूलान्नञः) ” ॥ अमूला ॥ ४ ॥

## ऋन्नेभ्यो ङीप् ॥ ५ ॥

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । कर्त्री । द-ण्डिनी ॥ ५ ॥

## उगितश्च ॥ ६ ॥

उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । पचन्ती । धा-तोरुगितो न । अञ्चतेस्त्विष्टः । उखास्रत् । पर्णध्वत् । प्राची । प्रतीची । एतच्च उगिदचामिति सूत्रेऽज्ग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमनाल्लभ्यते । अधातोरिति तु वाक्यभेदेना-धातुभूतपूर्वाद्विधानार्थम् । तेन गोमत्यतेः क्विप् गोमानिति सिद्धम् । करिष्यमाणा ब्राह्मणीत्यत्र तु न भवति । लक्षय-

मनुबन्धकार्यं नेति सामान्यापेक्षज्ञापकात् । तदनुबन्धकपरिभाषया वा । शत्रादौ तु सामर्थ्यात् सा न प्रवर्त्तते लृटि तु न सामर्थ्यम् । लृलुटोरित्यादौ चारितार्थत्वात् ॥ ६ ॥

वनो र च ॥ ७ ॥

वनन्तात् प्रातिपदिकात् स्त्रियां ङीप्स्याद्रश्चान्तादेशः। इह वन्निति क्वनिप्क्वनिब्वनिपां सामान्यग्रहणम् । प्रत्ययग्रहणे तदन्तग्रहणम् । तेन प्रातिपदिके विशेषणात्तदन्तान्तं लभ्यते । सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । शर्वरी । व्यपदेशिवद्भावाद्वन्नन्तादपि भवति । न चाप्रातिपदिकेनेति निषेधः शङ्क्यः । तस्यास्माभिर्येन विधिरिति सूत्र एव प्रत्याख्यातत्वात् । स्वं रूपमित्यस्यानुवृत्तेश्च । तस्य चेति वार्त्तिकं सर्वशेष इति भाष्ये एव स्थापितत्वाचेति दिक् । ऋन्नेभ्य इति ङीपमनूद्य तत्सान्नियोगेन रेफमात्रं विधीयते ।

स्यादेतत् । बहवो धीवानो यस्यामिति विग्रहे बहुधीवरीति पाक्षिकामिष्यते । तन्न सिद्ध्यति । अत उपधालोपिन इति ङीपि लब्धे ऽपि तस्य प्रकरणान्तरस्थतया तत्सान्नियोगेन रेफस्य दुर्लभत्वात् । स हि ऋन्नेभ्य इत्यनेन ङीपा सन्नियोगशिष्टः । उच्यते । बहुधीवरीत्यत्रापि ऋन्नेभ्य इत्यनेन ङीप् । अत एव रेफः सिद्ध्यति । न चानो बहुव्रीहेरिति तन्निषेधः शङ्क्यः। डावुभाभ्यामित्यत्र निषेधडापोः पर्याये लब्धे तत्रत्यस्यान्यतरस्याङ्ग्रहणस्य निषेधडाभ्यां मुक्ते प्रकृतङीबपि प्रवर्त्ततामित्येतदर्थत्वात् । न चैवं मन्नन्ते ऽपि ङीप्प्रसङ्गः । व्यवस्थितविभाषाश्रयणात् योगविभागाद्वा । तथा हि । डावुभाभ्याम् । मन्नन्तादन्नन्तबहुव्रीहेश्च डाप्स्यात् । सामर्थ्यात् पर्यायः। इतरथा हि मनोडाप् अनोबहुव्रीहेरि-

स्यैव सूत्रयेत् । ततः अन्यतरस्याम् । मन इतीह निवृत्तम् । अनो बहुव्रीहेर्वा डाप् स्यात् । पूर्वेण सिद्धे ङीपा सह विकल्पं लब्धुमिदमिति । न चैवमन उपधेत्यादेर्वैयर्थ्यम् । अनो योऽसौ विकल्पः स उपधालोपिन एवेति नियमार्थं तदारम्भात् । तथा च तस्य निषेधार्थतया सुपर्वेत्यादिरनुपधालोपी उदाहरणम् । एषा तावत् सूत्रमते बहुधीवर्या गतिः । भाष्ये तु सूत्रभङ्गेनापि समाहितम् । अनो बहुव्रीहेरित्यस्मादनन्तरमुपधालोपिनो वेत्येवास्तु । प्रदेशान्तरस्थं तु अन उपधेत्यादिसूत्रं मास्त्विति । तस्माद्बहुधीवानौ बहुधीवे बहुधीवर्याविति रूपत्रयं स्थितम् । वनो न हश इति वक्तव्यम् । विहितविशेषणं चेदम् । हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीब् नेत्यर्थः । तेन शर्वरीत्यत्र प्रतिषेधाभावः । ओणृ अपनयने । वनिप् । विड्वनोरित्यात्वम् । हशन्ताद्विहितत्वान्न ङीब्रौ । अवावा ब्राह्मणीति हरदत्तः । प्रायिकोऽयं निषेधस्तेनावावरीति न्यासकारः । बहुलं छन्दसीति ङीब्रौ वक्तव्यौ । अश्विना यज्वरी रिसः । वनो न हश इत्युदाहृतनिषेधश्च ङीषोऽपि बाध्यः । तेन राजयुध्वा स्त्रीत्यत्र ऋन्नेभ्य इति न ङीप् ॥ ६ ॥

पादोऽन्यतरस्याम् ॥ ७ ॥

पाच्छब्दः कृतसमासान्तः । तदन्तात् प्रातिपदिकाद्वा ङीप् स्यात् । द्विपदी । द्विपात् ॥ ७ ॥

टाबृचि ॥ ८ ॥

ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । ङीपोऽपवादः । द्विपदा ऋक् । एकपदा । ननु पदशब्दः पादसमानार्थकोऽस्ति । तस्याः सप्ताक्षरमेकं पदं एकः पाद इति व्याप्सूत्रे

भाष्यात् । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विति को-
शाच्च । तेनैव सिद्धमेकपदेति रूपम् । सत्यम् । ङीप्निवृत्तये
हलन्तप्रयोगनिवृत्तये च सूत्रारम्भः ॥ ८ ॥

न षट्स्वस्रादिभ्यः ॥ ९ ॥

स्त्रियां यद्विहितं तदेभ्यो न स्यात् । पञ्च स्त्रियः । इह न-
लोपे कृते प्राप्तष्टाप् ततः पूर्वं प्राप्तो ङीप् चेत्युभयं निषिध्यते । न
च नलोपस्यासिद्धत्वादेव न टाबिति वाच्यम् । नलोपः सुप्स्व-
रादिष्वेवासिद्ध इति नियमात् । न च चापः पकारेण सुप्प्र-
त्याहारमाश्रित्य टाब्विधेरपि सुब्विधित्वं सुवचम् । बहुचर्मि-
कादौ प्रत्ययस्थादितीत्वस्याप्राप्तिप्रसङ्गात् । इत्वं ह्यापि विधीय-
मानं सुपि विधिः । तस्मिन् कर्त्तव्ये राजभ्यामित्यादौ सुपि
चेति दीर्घ इव नलोपस्यासिद्धत्वं स्यात् । आह च ।

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्वे तस्मान्नोभाविति ॥
स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

भागवृत्तिकारस्तु नप्तृशब्दमपि स्वस्रादिषु पठित्वा नप्ता
कुमारीत्युदाजहार । अमरस्तु नप्त्री पौत्री सुतात्मजेति ङीप-
मुदाहरन्नैतन् मेने । तिसृचतस्रोरिह पाठः सन्निपातपरिभाषाया
अनित्यत्वं ज्ञापयति । तेन यादि सिद्धम् ॥ ९ ॥

मनः ॥ १० ॥

मन्नन्तान्न ङीप् । सीमा । अतिमहिमा ॥ १० ॥

अनो बहुव्रीहेः ॥ ११ ॥

अन्नन्ताद् बहुव्रीहेर्न ङीप् । सुपर्वा । सुशर्मा ॥ ११ ॥

डाबुभाभ्यामन्यतरस्याम् ॥ १२ ॥

सूत्रद्वयोपात्ताभ्यां प्रकृतिभ्यां डाब् वा स्यात्। इह योगविभागादिकं वनो रचेत्यत्रैव व्युत्पादितम् । सीमा। सीमे । सीमाः। सुपर्वे। सुपर्वाः। इहान्नन्तस्य बहुव्रीहेः प्राप्तो ङीबुपधालोपिन एवेति नियमान्नेत्युक्तम् । भाष्यकारस्त्वाह । अनो बहुव्रीहेरित्यस्मादनन्तरं उपधालोपिनो वेति कर्त्तव्यम्। एवञ्चान इति न कर्त्तव्यम् । डाप्सूत्रे चान्यतरस्यां ग्रहणं त्याज्यमिति । बहुराजे बहुराज्ञ्यौ बहुराजानावित्यत्रोभयथापि रूपत्रयं निर्विवादम् ॥ १२ ॥

अनुपसर्जनात् ॥ १३ ॥

अधिकारोऽयम्। यदिह वक्तव्यं तत् सर्वादिसूत्र एवोक्तम्॥१३॥

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य प्रथमे
पादे प्रथममाह्निकम्।

---

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्
ठञ्कञ्क्वरपः ॥ १४ ॥

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात्। कुरुचरी। उपसर्जनत्वान्नेह । बहुकुरुचरा । इहानेकं वाक्यम् । तत्राण् योऽकार इति व्याख्यानान्नेह आपिशलमधीते आपिशला ब्राह्मणीति प्रोक्तार्थे अण् उपसर्जनम् । अध्येत्रण् तु लुप्त इति टाबेव भवति। तदनुबन्धकग्रहणे नातदनुबन्धकस्य । तेनेह न पचमाना। ल्युडन्तात्तु टित्वसामर्थ्याद्भवत्येव । गोदनी । लटस्तु टित्वं टेरेत्वे चरितार्थम् । यदि तु तदनुबन्धकेति परिभाषा विशिष्टरूपो-

च्चारणविषयैव तर्हि शानचः शित्वमनुबन्धकार्येष्वपि क्वचिदनल्विधाविति निषेधज्ञापनार्थमिति पचमानेति सिद्धम् ।

केचित्तु यासुटो ङित्वं सामान्यतो ज्ञापयति लाश्रयमनुबन्धकार्यमादेशानां नेति । तेन पचमाना करिष्यमाणा ब्राह्मणीत्यत्र टिल्लक्षण उगिल्लक्षणश्च ङीप्नेत्याहुः । पठिता विद्येत्यत्र तु न ङीप् । इटष्टित्वस्यादेशविधौ चरितार्थतया प्रत्ययाविशेषकत्वेन टिदन्तस्य टितो वा प्रातिपदिकस्याभावात् ।

यदुक्तं वृत्तिकृता ट्युट्युलोष्टित्करणं ज्ञापकं आगमटित्वं न ङीपं प्रवर्त्तयतीति । अन्यथा हि तुटष्टित्वेन सिद्धे किं तेनेति । तच्चिन्त्यम् । पुराणप्रोक्तेष्विति लिङ्गात्तुडभावपक्षे ङीपा तस्य चरितार्थत्वात् । न च बह्वादित्वात्तत्र ङीषेव, पुनः पुनर्जायमाना पुराणीत्यादावन्तोदात्तत्वदर्शनादिति वाच्यम् । बह्वादिभ्यश्चेत्यत्र वेत्यनुवृत्त्या पक्षे ङीपो दुर्वारत्वादिति हरदत्तः । अत्रेदं वक्तव्यम् । पुराणशब्दो घृतादित्वादन्तोदात्तः । अयं पन्था अनुवित्तः पुराणः पुराणप्रोक्तः सख्यमित्यादावन्तोदात्ततया निर्विवादत्वात् । ततश्च ङीषा मुक्ते टावेव न तु ङीप् । अन्यथा गौरादिष्वेव पठेत् । अन्तोदात्तान्ङीप्ङीषोरविशेषात् । तस्माद् वृत्तिकारोक्तं ज्ञापकं सम्भवत्येव । किन्त्वस्मदुक्तरीत्या निष्फलं तदिति दिक् ।

धेटष्टित्वात् स्तनन्धयी । धेटष्टित्वं चेहैव ङीपं प्रवर्त्तयति । न तूक्तं रावुलाद्यन्त इति नासिकास्तनयोरिति हरदत्तादयः । अत्र च सम्प्रदाय एव शरणम् । ढ । सौपर्णेयी । यद्यपि ढक्ढञोः सानुबन्धकत्वं तथापि निरनुबन्धकस्यासम्भवात्तयोरेवेह ग्रहणम् । शिलाया ढ इति हि ढे शिलेय-

मिति क्लीबमेव । स्वभावात् । यो ऽपि तत्र साधुरिति अधिकारे सभाया यः ढश्छन्दसीति विहितस्तदन्तमपि । स्त्रीलिङ्गं सभेयी पण्डितमण्डलीत्यादि वेदे नास्त्येव । एतच्च निरनुबन्धकासम्भवप्रतिपादनपराद्भाष्यादेव निर्णीयते । अण् । उपगोरियं औपगवी । कुम्भकारी । कथं तर्हि चौरी तापसीति । चुरातपःशब्दाभ्यां शीलमित्यर्थे छत्रादिभ्यो णः । तत्र टाप्प्राप्नोति । तदस्यां प्रहरणमिति णप्रत्यये कृते दाण्डा मौष्टेत्यत्र यथा । अत्राहुः । छत्रादिभ्य इति णे ऽप्यण्कृतं भवति ज्ञापकात् । तथा हि । कार्मस्ताच्छील्ये इति टिलोपो निपातितः अन्निति प्रकृतिभावं बाधितुम् । स च प्रकृतिभावो ऽणि विधीयमानश्छत्रादिणान्तस्य कर्मशब्दस्य प्राप्त एव न यदि छत्रादिणे ऽण् कृतं न स्यादिति । अञ् । उत्से भवा औत्सी । उदपाने भवा औदपानी । उत्सादिभ्यो ऽञ् । साधारणी । धारेर्ण्यन्ताण्ण्यासश्रन्थ इति युचि समाना धारणा यस्या इति बहुव्रीहौ पृषोदरादित्वात् समानस्य सादेशो दीर्घः । आग्नीध्रसाधारणादञिति पाञ्चमिकवार्त्तिकेन पाक्षिकः स्वार्थे ऽञ् । तदभावे तु टाप् साधारणा । न चेह शार्ङ्गरवाद्यञ् इति ङीना सिद्धम् । अञन्तस्याद्युदात्ततया ङीपि ङीनि च स्वरे विशेषाभावादिति वाच्यम् । अजातित्वात् । शार्ङ्गरवादीत्यत्र हि जातेरित्यनुवर्त्तते । अन्यथा पुंयोगे ङीषमपि ङीन् बाधेत वैदस्य स्त्री वैदीति । न चैवं विदस्यापत्यं वैदीत्यत्रापि टिड्ढाणञित्यनेनैव सिद्धे शार्ङ्गरवादिसूत्रस्थमञ्ग्रहणं व्यर्थमिति वाच्यम् । औत्सीत्यादौ चरितार्थस्य ङीपो जातिलक्षणेन परेण ङीषा बाधापत्तेः । अञ्ग्रहणं स्पष्टार्थमिति तु प्रसादकारस्य प्रमाद एव । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । तयप् । पञ्चत-

यी । मात्रजिति प्रत्याहारग्रहणे तु द्वयसच्दघ्नच्तयपां ग्रहणं शक्यमकर्तुमित्युक्तं सर्वादिसूत्रे। ठक्ठञोर्भेदनोपादानं ठञ्निवृत्त्यर्थम् । आक्षिकी । लावणिकी । ठनि तु दण्डो ऽस्त्यस्या दण्डिका । अत एव ञिठो ऽपि न ङीप् । काशिषु भवा काशिका । काश्यादिभ्यष्ठञ्ञिठौ । कञ् । तादृशी । अत्रेदमवधेयम् ।

याद्दगादौ सूत्ररीत्या कर्मकर्त्तरि कृत् स्मृतः ।
भाष्यकारैस्त्विवार्थे ऽत्र दृग्दृशौ तद्धितौ स्मृतौ ॥

अयं हि भाष्याशयः । दृग्दृशवतुष्विति सूत्रे दृक्षे चेति वार्तिकेन क्सः कल्पत इति यथा प्रसिद्धरीत्या स्वीकृतं तथा दृग्दृशदृक्षा एव वतुसाहचर्यादुत्तरपदाधिकारं बाधित्वा तद्धिताः कल्प्याः । ते च लोकसिद्धमिवार्थमुपजीवितुं इवे प्रतिकृताविल्यधिकारे कल्प्यन्ते । पदान्तविषये कुत्वमपि दृग्दृशेति निपातनात् सिद्धम् । न चैवं दृग्दृष्टिरिति न सिद्ध्येदिति वाच्यम् । दृग्दृशेति निर्देशस्य सामान्यापेक्षज्ञापकत्वादिति । अस्मिन् पक्षे कञ्ग्रहणमपनीय तस्य स्थाने दृशः पाठ्यः । क्वरप् । इत्वरी । इणनशजीत्यादिना क्वरप् । क्वरपोऽन्यतरानुबन्धोपादानं स्पष्टार्थम् । एकेनैव वरचो व्यावृत्तेः । स्थेशभासेति वरच् । विन्यस्तमङ्गलमहौषधिरीश्वराया इति भारविः। ईश्वरीति तु त्रेधा । तथा हि । पुंयोगलक्षणे ङीषि अन्तोदात्तम् । इच्चोपधाया इत्यनुवृत्तौ अश्नोतेराशुकर्मणि वरडित्यौणादिके वरटि टित्वान्ङीपि मध्योदात्तम् । ईशेः क्वनिपि वनिपि वा ङीब्रयोराद्युदात्तमिति । अत्र वार्त्तिकम् । ख्युन उपसंख्यानमिति । सौनागास्तु नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानं पेठुः । आढ्यसुभगेत्यादिसूत्रे भाष्य एवेदं स्पष्टम् । स्त्रैणी । पौंस्नी ।

शार्क्कीकी । बाहीकी । आढ्यङ्करणी । तरुणी । तलुनी । तरुणतलुनयोर्गौरादिषु पाठान् ङीष्ङीपोः पर्यायो बोध्यः । स्वरे विशेषः । तरुणतलुनयोरुनन्प्रत्ययान्तत्वेनाद्युदात्तता । सैव ङीपि । ङीषि त्वन्तोदात्ततेति । वृत्तिकारस्तु ख्युनं सूत्रे प्रक्षिप्तवान् ॥ १४ ॥

यञश्च ॥ १५ ॥

यञन्तात् स्त्रियां ङीप् स्यात् । गार्गी । वात्सी । ननु द्वीपे भवा द्वैप्या । द्वीपादनुसमुद्रं यञ् । इहापि ङीप् प्राप्नोति । सत्यम् । अत एवेह आपत्यग्रहणं कर्त्तव्यमिति वार्त्तिककाराः । भाष्ये तु कञ्करपो ऽञश्चेत्यकारः प्रश्लिष्यते । गर्गादिभ्यो यञिति सूत्रे ऽप्येवम् । न चैवं यञिञोश्चेति सूत्रे ह्यनुबन्धकत्वादयञ् न गृह्येतेति वाच्यम् । गोत्रग्रहणानुवृत्तिसामर्थ्येन परिभाषाबाधात् । यस्कादिभ्यो गोत्रे यञिञोश्चेति तत्राप्यकारप्रश्लेषाद्वेति सिद्धान्तः । देवाद्यञञाविति प्राग्दीव्यतीये यञि तु देवस्यापत्यं दैव्येति टाबेव । यद्यपि वार्त्तिकरीत्या ङीप्प्राप्तस्तथापि भाष्ये ऽयञ् इति व्याख्यातत्वात् । यथोत्तरं मुनीनां प्रामाण्यात् । यद्वा आपत्येति वार्त्तिकमपत्याधिकारविहितपरं व्याख्येयम् । तथाभूतश्च गर्गादियञेव न तु देवाद्यञ् । तस्यापत्याधिकारात् प्रागेव पाठात् । तथा च भाष्यवार्तिकयोरविरोधः ॥ १५ ॥

प्राचां ष्फ तद्धितः ॥ १६ ॥

यञन्तात् ष्फो वा स्यात् स्त्रियां स च तद्धितः । षित्वसामर्थ्यात् ष्फेणोक्ते ऽपि स्त्रीत्वे ङीष् । गार्ग्यायणी । आवट्यायनी । स्यादेतत् । आवट्याचेति चापीह भाव्यम् । चाप् च यद्य-

ष्युदीचां मते सावकाशस्तथापि परत्वादावट्यात् ष्फं प्राचां मते बाधेत । अत्राहुः । उत्तरसूत्रात् सर्वत्रग्रहणमिहापकृष्यते तेन बाधकाविषयेऽपि प्राचां ष्फ एव भवति । एवं षाद्यञश्चा-ञ्विषयेऽपि प्राचां ष्फ एव । शार्कराक्ष्यायणीति यथा ॥ १६ ॥

सर्वत्र लोहितादिकतन्तेभ्यः ॥ १७ ॥

लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यः ष्फः स्यात् सर्वस्मिन् मते । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे सर्वत्रग्रहणं व्यर्थमिति चेन्न । पूर्वसूत्रे बाधकबाधनेनोपयुक्तस्य तस्येहापि स्पष्टत्वार्थमनुवृत्तेरभ्युपगमात् । लौहित्यायनी । इह गर्गादौ कपि कत कुरुकतेति पठ्यते । तत्र कपिशब्दात् परः कतशब्द एवात्रावधिः तस्य स्वतन्त्रप्रातिपदिकतया अर्थवत्त्वात् । कुरुकतेति तु कतशब्दः प्रातिपदिकैकदेशः ।

कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥

गणशुद्ध्यर्थमिदं वार्त्तिकम् । गणे हि कपिकत कुरुकत । अनडुहः । कण्व शकलेति पठ्यते । तत्रानडुहकुरुकतशब्दावस्मात् स्थानादपकृष्यान्यत्र पाठ्यौ शकलशब्दस्तु कतकण्वयोर्मध्ये पाठ्यः । न चैवं शकलो गर्गादियञ्मात्रं लभेत न तु ष्फाणौ । लोहितादिकण्वाद्युभयबहिर्भूतत्वादिति वाच्यम् । कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषाश्रयणात् । कतस्य ह्यन्तः समीपः शकलः तथा कण्वस्यादिरपि स एव । स्वराभिन्नानामिति वचनाद्बहुव्रीहेः शेषः । तेन शाकल्यायनी शाकल्यस्य छात्राः शाकलाः । लोहितादित्वात् ष्फः । कण्वादि-भ्यो गोत्रे इत्यण् च सिद्ध्यति ।

कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥

आभ्यां ष्फः स्यात्। कुर्वादिभ्यो ण्य इति ण्ये कृते ढक् च मण्डूकादित्यणि च कृते यथाक्रमं टाप्ङीपोरपवादः। कौरव्यायणी। माण्डूकायनी। कौरव्यसाहचर्यादपत्यप्रत्ययान्तस्यैव माण्डूकस्येह ग्रहणम्। अत एव यत्रासौ कूपमाण्डूकि तवैतावतिक्रमय इति भट्टिप्रयोगे मण्डूकस्येयं भार्येति तस्येदमित्यणिति जयमङ्गला। आसुरेरुपसंख्यानम्। आसुरायणी। छश्चेति वक्तव्यम्। आसुरिप्रसङ्गादिदमुक्तम्। शैषिकेष्वर्थेषु इञश्चेत्यणि प्राप्ते छ उपसंख्येय इत्यर्थः। असुरस्यापत्यमासुरिः तेन प्रोक्त आसुरीयः कल्पः। अत्र छ एवावश्योपसंख्येयः। ष्फस्तु प्राचामिति सूत्रे तद्धितग्रहणात् सिद्धः। अन्यतोऽपि विधाने हि सति यस्येति लोपप्रवृत्त्या तत् सार्थकम्। अकारान्तेषु सवर्णदीर्घेणापि रूपसिद्धेः। न च प्रातिपदिकसंज्ञैव तत्फलम्। तां विनाऽपि षित्वसामर्थ्यान्ङीष्सिद्धेः।

वयसि प्रथमे ॥ २० ॥

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात्। कुमारी। प्रथमवयोवाची एषः। न तु अनूढत्वप्रयुक्तः पुंस्यपि प्रयोगात्। वृद्धकुमारीति तु गौणः प्रयोगः॥ वयस्यचरम इति वक्तव्यम्। वधूटी। चिरिण्टी। वधूटचिरिण्टशब्दौ यौवनवचनौ। यौवनं च न प्रथमं किन्तु द्वितीयमिति वार्त्तिकारम्भः। यद्यप्युपचयापचयलक्षणे द्वे एव वयसी इति पक्षे यौवनस्यापि प्राथम्यात् सूत्रेणैव सिद्धं तथापि मतान्तरेण वार्तिकारम्भः। चत्वारीति हि केचित्। यथाहुः।

आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्।

तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसीति ॥

त्रीणीन्यन्ये यथाहुः ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।

पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति ॥

अतः किम् । शिशुः । इह तु न भवति । उत्तानशया । लोहितपादेति । प्रकरणादिना वयसः प्रतीतावपि तस्य शब्दादप्रतीतेः । याऽपि हि व्याध्यादिवशादुत्ताना शेते अलक्तकेन च रक्तचरणा साऽपि शब्दात् प्रतीयत एव । कथं पुनर्द्विवर्षेति । उच्यते । इहापि न वयो वाच्यम् । शालादावपि प्रयोगात् । कन्यायाः कनीन चेति ज्ञापकात् कन्याशब्दान्न ङीप् ।

द्विगोः ॥ २१ ॥

द्विगुसमासाददन्तात् प्रातिपदिकान्ङीप् स्यात् । त्रिलोकी । अजादित्वात्त्रिफला ।

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥

एतदन्ताद्द्विगोर्ङीन्न स्यात् तद्धितलुकि सति । अपरिमाणान्तात् । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । तद्धितार्थे द्विगुः । आर्हीयष्ठक् । अध्यर्द्धपूर्वेति ठको लुक् । परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तत्परिमाणम् । आह च उर्ध्वमानं किलोन्मानं परिमाणं तु सर्वत इति । तेन कालसंख्ययोर्न ङीप् । द्वे वर्षे भूतेति ठञो वर्षाल्लुक् चित्तवति नित्यमिति लुक् । द्विवर्षा । द्वयोरह्नोर्भवा द्व्यह्ना । कालाट्ठञ् । द्विगोर्लुगनपत्ये इति ठञो लुक् । ननु द्विगोरिति ङीपि निषिद्धेऽपि टबन्तत्वात् स्यादिति चेन्न । टबोऽकार इति व्याख्यानात् । अन्यथा द्विवर्षा न स्यात् । न चैवमपि राजाहरिति टचमाश्रित्य स्यादिति वाच्य-

म्। टिड्ढोऽनुपसर्जनमित्युक्तेः। इह च तद्धितार्थे प्रत्युपसर्जनत्वात्। भाष्यकारैरचा टचो बाधोपगमाच्च। यत्त्वत्र रात्राह्नाहा इति पुंस्त्वेन भाव्यमिति। तन्न। तस्य परवल्लिङ्गमात्रबाधकत्वेऽपि तद्धितान्तत्वप्रयुक्तद्विवर्षादिसाधारणविशेष्यनिघ्नत्वाबाधकत्वात्। द्विशता। द्वाभ्यां शताभ्यां क्रीतेति पणपादमाषशताद्यदिति नित्ये यति प्राप्ते शाणाद्वेत्यत्र शताच्चेति वक्तव्यमिति वचनात् पक्षे संख्याया अतिशदन्तायाः कन्निति कन्। तस्याध्यर्द्धेति लुक्। कालसंख्ययोरिव प्रमाणवाचिनोऽप्यपरिमाणत्वं तुल्यम्। तेन द्वौ शमौ प्रमाणमस्या इति मात्रचः प्रमाणे लो द्विगोर्नित्यमिति श्लोकवार्त्तिकेन लुकि द्विशमा त्रिशमेति भवति। शमो हस्तः। पाणिः शमः शयो हस्त इत्यपरमाला। पञ्चशाखः शयः पाणिरित्यमरकोशेऽपि शम इति पाठान्तरमिति क्षीरस्वामी। उन्माने तु विवदन्ते। तथाहि। द्वाभ्यां निष्काभ्यां क्रीता। प्राग्दीव्यतीयस्य ठञो द्वित्रिपूर्वान्निष्कादिति लुक्। द्विनिष्का त्रिनिष्केत्येके। अन्ये तून्मानमपीह परिमाणग्रहणेन गृह्यते बिस्तकम्बल्यग्रहणाज्ज्ञापकात्। उन्मानवचनौ हि तौ। सुवर्णबिस्तौ हेम्नोऽक्षे इत्यमरः। बिस्तस्य त्रिद्यापरिसंख्यया मे इति कालिदासः। कम्बलाच्च संज्ञायामिति यत्। कम्बल्यमूर्णापलशतम्। न्यासकारस्तु द्वौ बिस्तौ पचतीति त्रिगृह्णन् बिस्तं परिमाणविशेषं मन्यते इति हरदत्तः। द्विबिस्ता। परिमाणत्वे ठञो लुक्। उन्मानत्वे ठकः। द्वावाचितौ पचति द्व्याचिता। आचितो दशभाराः स्युः। आढकाचितपात्रात् खोऽन्यतरस्याम्। द्विगोष्ठंश्चेति पक्षे ष्ठन्खौ। ताभ्यां मुक्ते प्राग्दीव्यतीयष्ठन्। तस्य पूर्ववल्लुक्। द्विकम्बल्या। क्रीतार्थे ठञो लुक्। अपरिमाणेति किम्। द्व्याढकी द्व्याचितावत्। ताद्धि-

तलुकि किम् । समाहारे पञ्चाश्वी । स्यादेतत् । तद्धितलुकि परिमाणादिति सूत्रमस्तु । नियमोऽयम् । तद्धितलुकि परिमाणादेवेति । ततः बिस्तादिभ्यो नेति । मैवम् । परिमाणाल्लुक्येवेति विपरीतनियमापत्तेः । तथाच समाहारे द्व्याढकीति न स्यात् । स्याच्च द्विवर्षेत्यत्र ङीप् । अथ व्याख्यानादिष्टतोऽवधारणं ब्रूयाः । एवमपि विपरीतं गौरवम् । तथाहि । अपरिमाणेत्येतदपेक्षया परिमाणादित्यत्रार्द्धमात्राधिक्यं त्रिदोषपरिसंख्यापत्तिश्च । तस्माद्यथान्यासमेवास्तु ।

काण्डान्तात् क्षेत्रे ॥ २३ ॥

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे द्वयसजिति विहितस्य मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुक् । प्रक्रियायां तु द्वयसजो लुगिति प्रमादः । प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ ममेति पञ्चमे वक्ष्यमाणत्वात् । ननु मानदण्डः काण्डं स च प्रमाणविशेषो न परिमाणम् । ततश्च पूर्वेणैव सिद्धो निषेधः । सत्यम् । क्षेत्रे नियमार्थं वचनम् । तेन द्विकाण्डी रज्जुरित्यत्र ङीप्स्यादेव । क्षेत्र इति च काण्डान्तस्य विशेषणं न तु काण्डस्य । बहुव्रीह्यर्थं प्रति गुणभूतत्वात् । तेन द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेत्यत्र न निषेधः । द्विकाण्डा क्षेत्रभक्तिरित्यत्र च निषेधः सिध्यति । अन्यथोभयत्रापि वैपरीत्यं स्यात् । अत एवान्तग्रहणं सार्थकम् । अन्यथा पुरुषात् प्रमाण इत्यत्रेव विशेषणेन तदन्तविधिलाभेऽपि पुरुषस्येव काण्डस्यैव श्रूयमाणत्वाद्विशेषणसंक्रमापत्तेः ॥

## पुरुषात् प्रमाणेऽन्यतरस्याम् ॥ २४ ॥

प्रमाणे यः पुरुषस्तदन्तात् प्रातिपदिकाद्द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा । अत्र न्यासकारः । प्रमाणे लो द्विगोर्नित्यमिति द्वयसचो लुगित्याह । तन्न । पुरुषशब्दस्य शमादिवत् प्रमाणत्वेनाप्रसिद्धतया प्रमाणे द्वयसज्जित्यत्रत्यस्य प्रमाणे ल इति श्लोकवार्त्तिकस्येहाप्रवृत्तेः । द्वयसज्दघ्नचौ तु प्रवर्त्तेते । उर्द्धमाने मतौ ममेति वचनात् । पुरुषात् प्रमाण इति प्रकृतसूत्रमपि सामर्थ्यात् प्रवर्त्तते इत्यन्यदेतत् । अत एव पुरुषद्वयसमित्यादौ प्रमाणे ल इति लुङ् न भवति । अन्यथा हि पुरुषहस्तिभ्यामराचेत्यणो विधानसामर्थ्याल्लुगभावेऽपि द्वयसजादीनां स्यादेव । एतच्च पुरुषहस्तीतिसूत्रे हरदत्तग्रन्थे स्पष्टम् । यत्तु तस्मिन् सूत्रे द्विगोर्नित्यं लुगिति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तम् । तस्मादप्राप्त एवात्र लुग्विधीयते । स च द्वयसजादीनां नाणः द्विगोस्तत्प्रापकाभावात् ग्रहणवतेति तदन्तविधिप्रतिषेधादिति । तदपि न । भाष्ये पृथग्वचनाभावात् । तस्मात् पुरुषात् प्रमाण इत्यत्र द्विगोस्तद्धितलुकीत्यनुवृत्तेरत एव ज्ञापकाल्लुगिति तत्त्वम् । अपरिमाणान्तत्वात् प्रतिषेधे प्राप्ते वचनम् । प्रमाणे किम् । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । तद्धितलुकीति किम् । समाहारे द्विपुरुषी । प्रमाणार्थवृत्त्योरेव समाहारान्न व्यङ्गविकलता ।

## बहुव्रीहेरूधसो ङीष् ॥ २५ ॥

ऊधोन्ताद् बहुव्रीहेः स्त्रियां ङीष् स्यात् । अलौकिके प्रक्रियावाक्ये समासार्थस्योत्तरपदस्योधसो ऽनङित्यनङादेशः ।

ततो डाप्ङीप्निषेधेषु प्राप्तेषु ङीष् विधीयते । न च मध्येऽपवादन्यायेन डाप्प्रतिषेधावेव बाध्यौ न त्वन उपधालोपिन इति ङीविति वाच्यम् । तस्य नियामकतायाः प्रागेवोक्तत्वात् । कुण्डोध्नी । स्त्रियां किम् । कुण्डोधो धैनुकम् । इहानङपि न । तद्विधौ स्त्रियामित्युपसंख्यानात् । स्यादेतत् । इहैव तर्हि लाघवार्थं ऊधसो ङीष् नश्चेति सूत्र्यताम् । उधसो नङिति च त्यक्त्वा धनुषो ऽनङित्येव पठ्यताम् । मैवम् । कबभावे सावकाशस्यास्य पक्षे कपा बाधापत्तेः । सिद्धान्ते तु अनङः समासान्ततया शेषत्वमेवेह नास्ति ।

संख्याव्ययादेर्ङीप् ॥ २६ ॥

ङीपोऽयमपवादः । द्व्यूध्नी । त्र्यूध्नी । अत्यूध्नी । निरूध्नी । बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः । संख्याव्ययाभ्यामिति तु नोक्तम् । प्रत्युत मात्राधिक्यापत्तेः । द्विविधोध्नीत्यत्र संख्योधसोः पदान्तरेण व्यवाये ङीवभावापत्तेश्चेति दिक् ।

दामहायनान्ताच्च ॥ २७ ॥

संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात् । दामान्ते डाप्प्रतिषेधयोर्बाधनार्थं वचनं हायनान्ते तु टापि प्राप्ते । द्विदाम्नी । समासनिर्देशेऽप्येकदेशस्यैव स्वरितत्वं प्रतिज्ञाय तेन संख्याग्रहणमेवेहानुवर्त्तते न त्वव्ययग्रहणम् । अत उद्दामा वडवेत्यत्र डाम्निषेधावपि पक्षे स्तः । दृष्टा चैकदेशानुवृत्तिर्बहुशः । यथा तस्य पाकमूले इत्यतो मूलग्रहणमात्रं पक्षात्तिरित्यत्रानुवर्त्तते । यथा वा झोऽन्त इत्यत्र प्रत्ययग्रहणमात्रमनुवर्त्तते न त्वादिशब्दः । द्विहायनी बाला । चतुर्हायणी । त्रिचतुर्भ्यां

हायनस्येत्यौपसंख्यानिकं णत्वम् । अथ कथं चतुर्हायना शालेत्यत्र न ङीम्णत्वे । उच्यते । हायनो वयसि स्मृत इति भाष्यात् वयोवाचकस्यैवोभयत्रापि ग्रहणमिति तस्यार्थः । सूत्रे अन्तग्रहणं स्पष्टार्थम् । बहुव्रीह्यधिकारादेव विशेषणेन तदन्तविधिलाभात् ।

अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥

अनन्ताद् बहुव्रीहेर्योऽसौ वैकल्पिको ङीप्प्राप्तः स उपधालोपिन एव स्यात् । अन उपधालोपिनो नेति फलितोऽर्थः । सुपर्वा । उपधालोपिनस्तु स्यादेव । सुराज्ञी । सुतक्ष्णी । पक्षे डाम्निषेधौ ॥

नित्यं संज्ञाछन्दसोः ॥ २९ ॥

अन्नन्ताद् बहुव्रीहेरुपधालोपिनो नित्यं ङीप्स्यात् संज्ञाछन्दसोः । सुराज्ञी नाम ग्रामः । शतमूर्ध्नी । यद्यपि अनिदंप्रथमासु संज्ञासु नियतैवानुपूर्वी । एवं छन्दस्यपि । तत्र च ङीपः प्राग्वदेव सिद्धौ विपरीतस्य चापादकाभावे व्यर्थमिदं सूत्रं तथाऽप्युत्तरार्थं बोध्यम् । योगविभागस्तु स्पष्टार्थः ।

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥

एभ्यो नित्यं ङीप्स्यात् संज्ञाछन्दसोः । अथोत इन्द्रः केवलीर्विशः । अध्यस्यां मामकी तनू । मित्रावरुणयोर्भागधेयी । अनिषव्यास्तन्वः सन्तु पापीः । उतापरीभ्यो मघवा विजिग्ये । समानीव आकूतिः । आर्यकृती । सुमङ्गली । शिवा रुद्रस्य भेषजी । कथं तर्हि सुमङ्गलीर्बिभ्रती देववीतिम् । सुमङ्गली-

रियं वधूरिति । मत्वर्थे ईप्रत्यय इति गृहाण । एतच्च छन्दसीव-निपौ च वक्तव्याविन्त्यत्र भाष्ये स्पष्टम् । आपायामसंज्ञायां तु केवलेत्यादि । मामकग्रहणं नियमार्थम् । अणन्तत्वादेव सिद्धेः । मामिका । मामकनरकयोपरुसंख्यानमितीत्वम् । भागशब्दात् पुल्लिङ्गात् स्वार्थे धेयप्रत्ययः । स्वार्थिकाः क्वचिल्लिङ्गवचनान्यतिवर्त्तन्ते इति णचः स्त्रियामञिति स्त्रियां ग्रहणेन ज्ञापितत्वात् स्त्रीत्वम् । भागधेया । अभेदोपचारात्तद्वति वर्त्तमानः पापशब्दो विशेष्यनिघ्नः । पापा । अपरा । अत्र द्वितीयो वर्णो दन्तोष्ठ्यो न पवर्ग्य इति हरदत्तः । इदं तु सकलवैदिकसंप्रदायविरुद्धम् । बह्वृचानां द्वितीयाध्यायान्त्यवर्गे पवर्गपाठस्य सर्वसंमतत्वात् । नञं पूर्वेण सम्बध्य तदुत्तरं च किं त्वित्यध्याहृत्य कथञ्चिद्धरदत्तभक्तैर्व्याख्येयम् । आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽकारान्तत्वम् । लोके टाप् । आर्यकृता । भिषज इयमित्याणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः । एवं च भेषजग्रहणमपि नियमार्थम् ।

राज्ञेश्चाजसौ ॥ ३१ ॥

रात्रिशब्दात् ङीप्स्यात् संज्ञाछन्दसोर्न तु जसि विषयीभूते । रात्री व्यख्यदायती । लोके त्वरात्री । रात्रिः । बह्वादिषु कृदिकारादक्तिन इति पाठाद्वा ङीप् । स्वरे विशेषः । राशदिभ्यां त्रिप् इति त्रिबन्तत्वादाद्युदात्तो हि रात्रिशब्दः । ङीपि त्वन्तोदात्तः । अजसौ किम् । यास्ता रात्रयः । अजसादिष्विति वक्तव्यम् । रात्रिं रात्रिं सहोषित्वा ।

अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥

एतयोर्नुक् स्यात् स्त्रियाम् । ऋन्नेति ङीप् । अन्तर्वत्नी

गर्भिणी । पतिवत्नी जीवद्भर्तृका । इह प्रकृतिभागौ निपात्येते अर्थविशेषलाभार्थम् । अलाक्षणिकयोर्मतुब्वत्वयोः सिद्ध्यर्थञ्च निपातनम् । उक्तं च ।

अन्तर्वत्पतिवतोर्नुक् मतुब्वत्वे निपातनात् ।
गर्भिण्यां जीववत्याञ्च वा च छन्दसि नुग्विधिः ॥

अयमर्थः । अन्तरस्त्यस्यां गर्भ इत्यत्रान्तःशब्दस्याधिकरणप्रधानतया अस्तिसामानाधिकरण्याभावादप्राप्तो मतुब्गर्भिण्यां वाच्यायां निपात्यते । वत्वं तु मादुपधाया इत्येव सिद्धम् । अत एव प्रत्युदाहरणे वाक्यमेव भवति । अन्तरस्यां शालायां घट इति । पतिवत्नीत्यत्र तु मतुप्सिद्धः । वत्वमात्रं निपात्यते । जीवतीति जीवः पतिर्यस्यास्तस्याम् । प्रत्युदाहरणं तु पतिमती पृथिवीति । नुक्तूभयत्र विधीयते । स च छन्दसि वा वक्तव्यः । सान्तर्वत्नी देवानुपैत् । अन्तर्वतीति शाखान्तरम् । तथा पतिवत्नी तरुणवत्सा । पतिवती तरुणवत्सा ।

पत्युर्नो यज्ञसंयोगे ॥ ३३ ॥

पतिशब्दस्य नकारादेशः स्याद्यज्ञेन संयोगे । यज्ञफलप्रतियोगिकमाधिपत्यं चेत् पतिशब्दो ब्रवीतीत्यर्थः । वसिष्ठस्य पत्नी । तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारस्य शास्त्रसिद्धत्वात् । कथं तर्हि वृषलपत्नीति । वृषलः पतिर्यस्या इति विग्रहे विभाषा सपूर्वस्येति सिद्धम् । अथ वृषलस्य पत्नीति व्यस्ते कथमिति चेत् । उपचाराद्भविष्यति पत्नीव पत्नीति । आचारक्विबन्तात् कर्त्तरि क्विब्वा । अस्मिंश्च पक्षे पत्नियौ पत्नियः इति इयङ् भवतीति विशेषः ।

विभाषा सपूर्वस्य ॥ ३४ ॥

पतिशब्दान्तस्य सपूर्वस्यानुपसर्जनस्य प्रातिपदिकस्य नो

वा स्यात् । गृहस्य पतिः । गृहपतिः । गृहपत्नी । अनुपसर्जनस्येति न पत्युर्विशेषणं किंतु तदन्तस्येत्युक्तं तेन दृढः पतिर्यस्याः सा दृढपत्नीति सिद्धम् । सपूर्वस्य किम् । गवां पतिः स्त्री । पातीति पतिरिति क्रियाशब्दस्य त्रिलिङ्गत्वादिह स्त्रीत्वम् । तथा च तैत्तिरीये क्लीबेऽपि प्रयुज्यते । अग्ने साम्राज्यानामधिपति तन्मावत्विति ।

नित्यं सपत्न्यादिषु ॥ ३५ ॥

पूर्वेण विकल्पे प्राप्ते आरम्भसामर्थ्यान्नित्यमिति लभ्यत एव । स्पष्टार्थं तु नित्यग्रहणम् । समानादिष्विति वक्तव्ये सपत्न्यादिष्विति वचनं सभावार्थम् । यत्तु कश्चिदाह । समुदायोच्चारणसामर्थ्यात् सपत्नीभार्य इत्यत्र पुंवद्भावो नेति । तन्न । सभावार्थतया सामर्थ्याभावात् । हे सपत्नि इत्यादौ संबुद्धिह्रस्वादिबाधापत्तेश्च । समान । एक । वीर । पिण्ड । पुत्र । भ्रातृ । इह दासश्छन्दसीति पठ्यते । दासपत्नीरहिगोपाः । लोके तु रूपद्वयम् । एवञ्च नित्यं छन्दसीत्यादीनामिवास्यापि फलं चिन्त्यम् ॥

पूतक्रतोरै च ॥ ३६ ॥

अस्यैकारादेशः स्यान्ङीप् च । न च ऐकारः प्रत्यय इति भ्रमितव्यम् । उत्तरसूत्रे उदात्त इति विशेषणस्य वैयर्थ्यापत्तेः । इयं त्रिसूत्री ङीब्विशिष्टा पुंयोगादित्यत्रानुवर्त्त्य व्याख्येया । इह पाठो हि ङीबर्थः । अन्यथा ङीष् स्यात् । पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः पूतक्रतुरेव सा ।

वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥ ३७ ॥

एषामुदात्त ऐ आदेशः स्यान्ङीप् च । वृषाकपिशब्दो ल-

घावन्ते द्वयोश्च बहुषो गुरुरिति मध्योदात्त उदात्तत्वं प्रयोजयति । अग्न्यादिषु त्रिषु तु स्थानिवद्भावात् सिद्धमिति प्राञ्चः । एतेन कुसिदशब्दं मध्यदीर्घं पठन्तः परास्ताः । वृषाकपेः स्त्री वृषाकपायी । हरविष्णू वृषाकपी इत्यमरः । वृषाकपायी श्रीगौर्योरिति च । अग्नायी । कुसितायी । कुसिदायी । पुंयोग इत्येव । वृषाकपिः स्त्री ।

## मनोरौ वा ॥ ३८ ॥

मनु शब्दस्यौकारादेशः स्यादुदात्तैकारादेशश्च वा ताभ्यां सन्नियोगशिष्टो ङीप्च । औकारैकारयोरभावे तु ङीबपि न सन्नियोगशिष्टानामिति न्यायात् । औकारश्चान्तरतम्यादनुदात्तः । मनुशब्दो ह्याद्युदात्तः । शृस्वृस्निहीत्यादौ मनेरुप्रत्ययविधायके सूत्रे धान्ये निदित्यधिकारात् । तथा च त्रैरूप्यम् । मनोः स्त्री मनायी । मनावी । मनुरिति ।

## वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥

वर्णवाचिनोऽनुदात्तान्तात्तोपधाद्वा ङीप्स्यात्तकारस्य नकारादेशश्च । एता । एनी । हरिता । हरिणी । श्येता श्येनी । रोहिता । रोहिणी । एते । आद्युदात्ताः । वर्णानां तणतिनितान्तानामिति फिट्सूत्रात् । तस्य तूदाहरणानि । एतः । शोणः । शितिः । पृश्निः । पृषत् । इति क्रमेण बोध्यानि । वर्णात् किम् । प्रकृता । प्रहृता । गतिरनन्तर इत्याद्युदात्तता । अनुदात्तात् किम् । श्वेता । अन्तोदात्तोऽयम् । घृतादीनां चेति फिट्सूत्रात् । श्येतो वाजी जायते अग्रे अह्नामिति प्रयोगाच्च । तोपधात् किम् । अन्यतो ङीष् वक्ष्यति । अत इत्येव । शितिः स्त्री । पिशङ्गादुपसंख्यानम् । पिशङ्गी । पिशङ्गा । लघावन्त इति मध्योदात्तत्वादिहोत्तरसूत्रेण

ङीष् प्राप्तः । असितपलितयोः प्रतिषेधो वक्तव्यः । असिता । पलिता । छन्दसि क्नमेके । असितपलितयोस्तकारस्य नकारं बाधित्वा क्नो भवति ङीप् चेत्यर्थः । असिक्न्यस्योषधे । पलिक्नीरिद्युवतयो भवन्ति । छन्दसीति भाष्योक्तेर्लोके गतो गणस्तूर्णमसिक्निकानामित्यादिप्रयोगाः प्रामादिका इति प्राञ्चः । वस्तुतस्तु छन्दस्येके इत्यन्वयाद्भाषायामपीति भाष्याभिप्रेतम् । अन्यथा एकग्रहणवैयर्थ्यात् । न हि छन्दसि पलिक्नीरिद्युवतय इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते । एतेन वृद्धा पलिक्नी । असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणीत्यमरो व्याख्यातः । अवदातशब्दस्तु न वर्णवाची किंतु विशुद्धवाची । दैप् शोधने इति स्मरणात् । त्रीणि यस्यावदातानि विद्या योनिश्च कर्म चेति प्रयोगाच्च । तेनावदातेत्यत्र ङीप्नेति पुंयोगादित्यत्र भाष्ये स्थितम् । कोशे तु अवदातः सितो गौर इति विशुद्धत्वसाधर्म्यादुपनिबद्धम् ।

अन्यतो ङीष् ॥ ४० ॥

वेति निवृत्तम् । तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात् प्रातिपदिकात् स्त्रियां ङीष्स्यात् । कल्माषी । सारङ्गी । कल्माषसारङ्गशब्दौ लघावन्त इति मध्योदात्तौ । शबली । अयमपि मध्योदात्तः । शपेर्वश्चेति कलप्रत्यये व्युत्पादनात् । वर्णादित्येव । खट्वा । अनुदात्तादित्येव । कृष्णा । कपिला । कृषेश्चेति नप्रत्यये कपेश्चेति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ ॥

षिद्गौरादिभ्यश्च ॥ ४१ ॥

षिद्भ्यो गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष्स्यात् ।

शिल्पिनि ष्वुन् । नर्तकी । ष्वुनः षित्वमवयवेऽचरितार्थत्वात् प्रातिपदिकस्य विशेषकम् । त्रपेत्यादौ तु न ङीप् । धातोः षित्वस्याङ्विधौ चरितार्थत्वात् । न चैवमपि मृजेत्यत्र ङीप् स्यात् । भिदादिपाठादङ्सिद्ध्या तत्र षित्वस्याचरितार्थत्वादिति वाच्यम् । मृजूधातोः षित्वस्यानाकरत्वात् । स्पष्टं चेदं धातुवृत्तिषु । गौरशब्दस्य वर्णवाचित्वेऽप्यन्तोदात्तत्वात् पाठः । मत्स्यादीनां योपधानां अयोपधादिति निषेधे प्राप्ते । अन्येषां जातिशब्दानां स्त्रीविषयार्थः पाठः । श्वन् तक्षन् एतयोर्ङीपि प्राप्ते । यदा तु श्वेवाचरतीत्याचारक्विबन्तात् कर्त्तरि क्विप् तदोपसर्जनत्वान्ङीपभावे निःशुनीतिवन्नान्तत्वान्ङीवेवेत्याद्युदात्तं शुनीति पदम् । उदात्तनिवृत्तिस्वरस्तु ङीपो न शङ्क्यः । अन्तरङ्गेण संप्रसारणाच्चेति पूर्वरूपेणाल्लोपस्य बाधात् । अत एवाल्लोपस्थानिवद्भावप्रयुक्तो यरानेति दिक् । अनडुही । अनड्वाही । अनकारान्तत्वादप्राप्ते ङीषि । सप्रत्यययोः पाठस्तु ङीषि परे आम्विकल्पार्थः । एषणः करणे इति पठ्यते । करणल्युडन्तादस्मान्ङीष् । अधिकरणल्युटि तु ङीबेवेत्यर्थः । गौतमस्य शार्ङ्गरवादित्वान्ङीनि प्राप्ते । वचनात् सोऽपि पक्षे भवति । आयस्थूणशब्दः शिवाद्यणन्तः । भौरिक्यादय इञन्ताः । तेषामणिञोरनार्षयोरिति ष्यङि प्राप्ते । आपिच्छिका नाम राजानः । जनपदशब्दात् क्षत्रियादञ् । तस्यातश्चेति लुक् प्रत्ययलक्षणेन ङीपि प्राप्ते । अग्रे हायनमस्या इति विग्रहे अस्मादेव निपातनाण्णत्वम् । प्रज्ञादित्वात् स्वार्थेऽण् । यद्यप्यणन्तस्य ङीप्ङीषोरविशेषस्तथापि णत्वनिपातनार्थ एव पाठः । प्रज्ञादौ पाठात् पूर्वपदात् संज्ञायामिति वा तत् सिद्धमिति चेत् सत्यम् । अत एव केचिदाग्रहायणीतीकारान्तं पठित्वा

आग्रहायणीभार्य इत्यादौ पुंवद्भावाभावः पाठफलमित्याहुः । एतदपि वृद्धिनिमित्तस्य चेति सिद्धमिति चेत् पुंवत्कर्मधारयेति प्रतिप्रसवस्थलेऽपि पुंवद्भावाभावः पाठफलमित्याशयो बोध्यः । सुमङ्गलात् संज्ञायामिति पठ्यते । जातिवचनोऽव्युत्पन्नः स्त्रीविषयः सुमङ्गलशब्दो लघावन्त इति मध्योदत्तो द्रष्टव्य इति हरदत्तः । गौर । मत्स्य । मनुष्य । शृङ्ग । गवय । हय । ऋष्य । पुट । द्रुण । द्रोण । अरीहण । वरेट । ऊणक । आमलक । कुवल । बदर । बिल्व । तर्क्कार । शर्क्कार । शष्कण्ड । शवल । संवलद । गडुज । पाण्डर । पिप्पल्यादयश्च । आकृतिगणोऽयम् । पृथिवीशब्दोऽत्र पठ्यते । तत्र प्रथेः षिवन्संप्रसारणं चेति षित्वादेव सिद्धे प्रत्ययान्तस्य पाठः पुंवद्भावनिवृत्तये इत्येके । स्त्रीविषयत्वात् पुंवद्भावप्राप्तिश्चिन्त्येति हरदत्तः । मातामहीति पठ्यते तत्र मातरि षिच्चेति वार्तिकात्षित्वेन सिद्धे अनित्यः षितां ङीषिति ज्ञापनार्थः पाठः । तेन दंष्ट्रेति सिद्धम् । अजादिषु पाठाट्टाबित्यन्ये ।

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥

एभ्यः एकादशभ्यः प्रातिपदिकेभ्यः क्रमादेकादशस्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत् । वर्ततेऽनयेति वृत्तिर्जीविका । अन्या तु जानपदी । उत्सादित्वादञन्तत्वेन टिड्ढेति ङीप्याद्युदात्तता । कुण्डी अमत्रं चेत् । अस्त्री कमण्डलुः कुण्डीत्यमरः । जातिवाचित्वेऽपि स्त्रीविषयत्वादप्राप्तो ङीष्विधीयते । अग्न्यादिपर्यायस्तु कुण्डशब्दो नपुंसके नियतः । कुण्डमग्न्यालये मानभेदे देवजलाशये इति मेदि-

नीकोशात् । यस्तु पत्यौ जीवति कुण्डः स्यादिति मनुष्य-जातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । कुण्डीयं न गोलकीति । न ह्ययं नियमः अपूर्वविधिसम्भवस्योक्तत्वात् । गोणी आवपनं चेत् । गोणाऽन्या । यादृच्छिकं नाम न तु धान्यावपनी । स्थली अकृत्रिमा चेत् । स्थलाऽन्या । यथा स्थलयोदकं परिगृह्णन्तीति पुरुषव्यापारनिष्पादितया सररायेत्यर्थः । भाजी । श्राणा चेत् । पक्वेत्यर्थः । भाजाऽन्या । नागी स्थौल्यं प्रकारश्चेत् । नागाऽन्या । गजवाची नागशब्दः । तत्सहचरितं स्थौल्यमुपादाय स्त्र्यन्तरे प्रयुक्त उदाहरणम् । सर्पे दृष्टत्वात्तद्गतं दैर्घ्यमुपादाय स्त्र्यन्तरे प्रयुक्तः प्रत्युदाहरणम् । जातौ तु जातिलक्षणो ङीषेव नागी हस्तिनी सर्पीणी वा । काली वर्णश्चेत् । कालाऽन्या । यादृच्छिकी संज्ञेयम् । नीली अनाच्छादनं चेत् । नीलाऽन्या । नील्या रक्ता शाटीत्यर्थः । नील्या अन् वक्तव्य इत्यन् । अनाच्छादनेऽपि न सर्वतः किं तु नीलादौषधौ । नीली ओषधिः । प्राणिनि च । नीली गौः । नीली वडवा । संज्ञायां वा । नीली । नीली वा । कुशी । अयोविकारः फाल इति यस्याभिधानम् । कुशाऽन्या । छन्दोगाः स्तोत्रीयागणनार्थानौदुम्बरान् शङ्कून् कुशा इति व्यवहरन्ति । अत एव हानौतूपायनेत्युत्तरमीमांसासूत्रे तत्रत्यभाष्यादौ च निर्दोषतायां सत्यामपि कुशाशब्दः स्त्रीलिङ्गो नास्त्येवेत्यभिप्रायको वाचस्पतिग्रन्थः प्रौढिमात्रपर इत्युक्तं द्वितीये । कामुकी । मैथुनेच्छा प्रवृत्तिनिमित्तं चेत् । मैथुनादन्यत् कामयितुं यस्याः शीलं सा तु कामुका । लषपतेत्युकञ् । कबरी । केशानां सन्निवेशविशेषश्चेत् । कबराऽन्या । चित्रेत्यर्थः । तथा च । प्रयुज्यते । व्याकीर्णमाल्यकबरां कबरी तरुराया इति ।

शोणात् प्राचाम् ॥ ४३ ॥

शोणात् प्राचामेव ङीष् नान्येषाम् । शोणशब्दस्य वर्णानां तणेत्याद्युदात्ततयाऽन्यतो ङीषिति प्राप्ते नियमोऽयम् । शोणी । शोणा । शोणः कोकनदच्छविरित्यमरः ।

वोतो गुणवचनात् ॥ ४४ ॥

उकारान्ताद्गुणवचनात् प्रातिपदिकात् स्त्रियां वा ङीष्स्यात् । मृद्वी । मृदुः । इदं सूत्रमपनीय मनोरौ वेत्यस्मादनन्तरं गुणवचनादुत इति पाठ्यम् । उत्तरसूत्रं तु स्वस्थान एव वा शब्दसहितं पाठ्यम् । बह्वादिभ्यो वेति । तेनाद्युदात्तेषु गुणवचनेषु ङीपि स्वरः सिध्यति । तथा च वार्त्तिकम् । गुणवचनान्ङीबाद्युदात्तार्थमिति । वस्वी ते अग्ने सन्दृष्टिः । पट्वी । धान्ये निदित्यधिकारे शृस्वृस्निहीत्यादिना वसेरुप्रत्यये नित्वादाद्युदात्तो वसुशब्दः । नैर्मल्यवाची । प्रशंसावाचीत्यन्ये । तथाचातिशयेन वसुर्वसिष्ठ इति व्युत्पादयन्ति । पटुशब्दोऽपि निदित्यधिकारे फलिपाटीत्यादिना व्युत्पादितः । मृदुशब्दस्त्वन्तोदात्तः । कुर्भ्रश्चेत्यधिकारे प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्चेतिकुप्रत्ययः । तत्रोदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वान्नास्ति ङीप्ङीषोर्विशेषः । खरुसंयोगोपधप्रतिषेधः । खरुः पतिंवरा कन्या । पाण्डुरियम् । स्यादेतत् । गुणो नाम नेहादेङ्रूपः । उत इति विशेषणात् । वचनग्रहणाच्च । नापि विशेषणमात्रं कुः करेणुर्द्रव्यमित्यादावतिप्रसङ्गात् । मृद्वीं पश्येत्यादौ विशेष्यासंनिधानेऽव्याप्तेश्च । न च प्रवृत्तिनिमित्तं तत्रापि विशेषणम् । अत एव यस्य हि गुणस्य भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविल्येतन्मृदुत्वमित्यादौ प्रवर्त्तेत इति वाच्यम् । व्यर्थविशेषण-

तापत्तेः । आखुरित्यादिकं हि व्यावर्त्यतया संमतम् । तत्रापि प्रवृत्तिनिमित्तप्रतीतेः कथं व्यावृत्तिः । उच्यते । संज्ञाजातिक्रियाशब्दान् हित्वा ऽन्ये गुणवाचिनः। चतुष्टयीति भाष्यस्य निष्कर्षादेष निर्णयः । अत एव प्राशस्त्यनैर्मल्यवाची वसुशब्दः प्रागुदाहृतः । नह्यस्य नैय्यायिकाद्यभिमतगुणवाचित्वमस्ति अत एव निरीक्ष्य मेने शरदः कृतार्थतेत्यादयः प्रयोगाः संगच्छन्ते । त्वतलोर्गुणवचनस्येत्यत्रापि प्रागुक्तस्यैव गुणशब्दार्थत्वात् । कथं तर्हि प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो द्वारवतीत्वमासीदिति माघः । उच्यते । संज्ञात्वान्नायं गुणः । द्वारवतीति संज्ञापि नेष्टा किमुत दीपोर्थ इत्याशयात् । कथं तर्हि । कथं सखीत्वं सखि रक्षणीयमिति । न कोपधाया इत्यत्र नेति योगविभागादिति दुर्घटवृत्तिकारादयः । भाष्यादिस्वरसेन त्वतलोरित्यत्र शुक्लादिरेव गुणो ग्राह्यः । तथाहि । एकतद्धिते चेति सूत्रे एकता एकमित्युदाहृत्य पुंवद्भावेन सिद्धमित्याशङ्क्य भगवतोक्तम् । उक्तमेतत्त्वतलोर्गुणवचनस्येति । अत्र कैयटः । एकशब्दस्य संख्यावाचितायां गुणवचनत्वेऽपि असहायवाचिनोऽतथात्वादिति भाव इति । अत एव प्रगृह्यसंज्ञाप्रकरणे विभक्तेरेवात्र संज्ञिनीत्वादिति कैयटः । कथं तर्हि शरदः कृतार्थतेत्यादीति चेत् । सामान्ये नपुंसकप्रयोगादिति गृहाण । एषैव भर्तुर्विप्रकृताऽपि रोषणतया मास्म प्रतीपं गम इत्यादौ तवापि गतिः । क्रियाशब्दतया त्वत्पक्षेऽप्यस्य गुणत्वाभावात् । तथाच परः सन्निकर्षः संहितेतिसूत्रे एकवर्णवर्तित्वाद्वाच इति भाष्यं कैयटो व्याख्यत् । सामान्योपक्रमात् स्त्रीप्रत्ययात् स्त्रीप्रत्ययाभाव इति । प्रसिद्धा च दृढभक्तिरित्यादौ एषैव गतिः । अत एव स्त्रियामितिसूत्रे व्यापिनीत्वात्प्रवृत्तेरिति कैयटः पुंयो-

गादितिसूत्रे स्त्रियाः संविधात्रीत्वादिति कैयटश्च संगच्छते। अत एव पत्युर्नो यज्ञसंयोग इतिसूत्रे पत्न्याः फलप्रतिग्रहीतृत्वादिति वर्तिग्रन्थमुपादाय हरदत्त आह। कर्तृत्वमात्रं विवक्षितं न तु स्त्रीत्वमिति ङीप् न कृत इति। एवं च नेष्टं पुरो द्वारवतीत्व-मित्यपि साध्वेव। यत्तु संज्ञाजातिव्यतिरिक्तं धर्ममात्रं गुणः तेन क्रियाशब्दानामपि पुंवद्भाव इति कश्चित्। तन्निर्मूलम्। उदाहृतसकलमहाग्रन्थविरुद्धं चेत्यलं बहुना।

यत्तु प्रकृतसूत्रे भाष्यम्।

"सत्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।

आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः॥" इति।

एतदपि स्वरूपकथनमात्रं प्रायोवादपरं च। उक्तोदाहरणे-ष्वव्याप्तेः। कैयटहरदत्तादिस्वरसस्तु लक्षणमेवेदमिति। अयं हि तदाशयस्तदीयग्रन्थे स्पष्ट एव। तथापि तद्दोषग्रस्त उक्तिसं-भवशून्यश्चेति नानूद्यते।

बह्वादिभ्यश्च ॥ ४५ ॥

एभ्यो ङीष्वा स्यात्। बह्वी। बहुः। इह गणसूत्राणि। शक्तिः शस्त्रे। शक्ती। शक्तिः। शस्त्रे किम्। शक्तिः साम-र्थ्यम्। शक्ति शस्त्रीति पाठे तु शब्दद्वयम्। शस्त्री। शस्त्रिः। अथ यथोत्तरमधिकसंग्रहार्थं त्रीणि वाक्यानि। इतः प्राण्यङ्गात्। धमनी। धमनिः। कृदिकारादक्तिनः। रात्री। रात्रिः। सर्वतो क्तिन्नर्थादित्येके। शकटी। शकटिः। अक्तिन्नर्थात् किम्। आक्रोशे नञ्यनिः। अजननिः। व्यवस्थितविभाषात्वादा-देशे ङतौ च न। सुगन्धिः। प्रियकतिर्वेश्या। तथाच परिशिष्टम्। इतोक्त्यर्थानादेशाद्वा कतेरिति। इह पद्धतीति पठ्यते। क्तिन्नन्तत्वादप्राप्तेः। हिमकाषिहतिषु चेति पद्भावः।

अहन्निति पठ्यते । सामर्थ्यात्तदन्तो बहुव्रीहिरुदाहार्यः । अनुपसर्जनाधिकारबाधश्च । दीर्घाह्नी प्रावृट् । पक्षे डापूङीपनिषेधाः । चन्द्रभागा नद्याम् । कल्याण । पुराण । चण्ड । कृपाण । विकट । विशाल । बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं पाठ इत्याहुः ।

नित्यं छन्दसि ॥ ४६ ॥

बह्वादिभ्यो नित्यं ङीष् स्याच्छन्दसि । बह्वीनां पिता । बह्वीः समाः । आरम्भसामर्थ्यात् सिद्धे नित्यग्रहणमुत्तरार्थमिति वृत्तिः । वस्तुतस्तु एतत्सूत्रं प्राक्सूत्रस्थबहुशब्दश्च व्यर्थमेवेति स्पष्टमेव ।

भुवश्च ॥ ४७ ॥

अस्मान्ङीष् स्याच्छन्दसि । विराट् सम्राट् विभ्वीः प्रभ्वीः । विप्रसंभ्य इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते । उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः । तेन क्विबन्तान्न ङीष् । स्वयम्भूः । कथं तर्हि भेको वर्षाभ्वीत्यमरः । अत्र केचित् । मितद्र्वादेराकृतिगणत्वाद्वर्षाभुशब्दं डुप्रत्ययान्तं नित्यस्त्रीलिङ्गमाहुः । प्रमाद एवायमिति बहवः । स्त्रियामिति वर्षाभूरिति तु रूपं निर्विवादम् । तथा च यादवप्रकाशः । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति ।

पुंयोगादाख्यायाम् ॥ ४८ ॥

पञ्चम्यर्थे सप्तमीयम् । या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततः स्त्रियां ङीष्स्यात् । गोपस्य स्त्री गोपी । यदा तु गोपशब्दो न लाक्षणिकः किन्तु मुख्यस्तदा तस्येदमित्याणि गौपीत्येव । योगश्चेह दम्पतिभाव एवेत्येके । वस्तुतस्तु सङ्कोचे

मानाभावाज्जन्यजनकभावोऽपि गृह्यते । तथाच भट्टिः प्रायुङ्क्त । कौशल्यया सावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत् । केकयदुहिता केकयीत्युपचर्यते । जनपद-शब्दादित्यपत्यप्रत्यये तु कैकेयीति स्यात् । न च तस्यातश्चेति लुक् । न प्राच्यभर्गादीति प्रतिषेधात् । तथाच कालिदासः । कैकेयि कामाः फलितास्तवेति । एतेन देवकी व्याख्याता । आद्यपक्षे तु गौरादित्वं शार्ङ्गरवादित्वं वा केकयशब्दस्य कल्पयन्ति । देवकशब्दात्तु अपत्यप्रत्यये कृतेऽपि संज्ञापूर्वकत्वे-नानित्यत्वान्न वृद्धिरित्याहुः । पुंयोगात्किम् । देवदत्ता । आख्यायां किम् । प्रसूता । अस्तीह पुंयोगो न तु पुंस आ-ख्यैषा । गोपालिकादीनां प्रतिषेधो वक्तव्यः । सिद्धये इति शेषः । आदिशब्दः प्रकारे । तेन पालकान्तान्नेत्यर्थः । तथा च परिशिष्टे सूत्रितम् । पुंयोगादज्येष्ठादिपालकान्तादिति । गोपालकस्य स्त्री गोपालिका । अश्वपालिका । सूर्याद्देवतायां चाब्वक्तव्यः । सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् । सूरी कुन्ती । मानुषीयम् । सूर्यतिस्येति यलोपः ।

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमा-
तुलाचार्याणामानुक् ॥ ४९ ॥

एषामानुगागमः स्यान् ङीष् च । इन्द्रादीनां मृडान्तानां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र पूर्वेण सिद्धे आगम-मात्रं विधीयते । हिमादीनां तूभयम् । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । हिमारण्ययोर्महत्त्वे । महद्धिमं हिमानी । महदरण्यमरण्यानी । यवाद्दोषे । दुष्टो यवो । यवानी । जात्यन्तरमेवेदम् । यवत्वजातिविरहेऽपि

तदाकारानुकरणमिह दोषशब्दार्थः । यवनाल्लिप्याम् । यवनानां लिपिर्यवनानी । तस्येदमित्यणो बाधको ङीष् । उपाध्यायमातुलाभ्यां वा । आभ्यां पुंयोगे ङीष् प्राप्तस्तत्सन्नियोगेनानयोर्वा आनुगागमो वक्तव्य इत्यर्थः । उपाध्यायशब्दस्याप्राप्ते मातुलशब्दस्य तु सूत्रेण नित्यं प्राप्ते विभाषेयम् । उपेत्याधीयतेऽस्मात् स उपाध्यायः। एरचापवाद इङश्चेति च घप्रत्ययः। उपाध्यायस्य स्त्री उपाध्यायानी । उपाध्यायी । या तु स्वयमेवाध्यापिका सा उपाध्यायी उपाध्याया च। अपादाने स्त्रियामित्युपसंख्यानम् । तदन्ताच्च वा ङीषिति तृतीये वार्तिकात् । मातुलानी । मातुली । मुद्गलाच्छन्दसि लिच्च । रथीरभून्मुद्गलानी ॥ ङीषो लित्वादानुगाकारस्य लित्स्वरः । लोके तु मुद्गली । तथा च क्षुद्रत्वाद्रकि मौद्गलेर इत्यप्रकरणे भाष्यम् । यत्तु न्यासकृतोक्तं मुद्गलानी शब्दे द्वितीय उदात्त इति तत्तु वेदबाह्यत्वमयुक्तमेव । आचार्यादणत्वं च । आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव । आचार्या । स्वयं मन्त्रव्याख्याकृदित्यर्थः । अर्यक्षत्रियाभ्यां वा स्वार्थेऽयं विधिः । अर्याणी । अर्या । अर्यः स्वामिवैश्ययोरिति स्मरणात् । स्वामिनी वैश्या वेत्यर्थः । क्षत्रिया क्षत्रियाणी । पुंयोगे तु ङीषेव । अर्यी । क्षत्रियी । अत्रामरस्य संग्रहः ॥

अर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥
आचार्याणी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ॥

उपाध्यायान्युपाध्यायीति इह अनुक् ह्रस्वादिरेव लाघवाद्वक्तव्य इति हरदत्तः । तन्न । अतो गुण इति पररूपप्रसङ्गात् । नन्वकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति । अन्यथा हि नकमे-

व कुर्यादिति चेन्न । अल्लोपोन इत्यस्य बाधने चरितार्थत्वात् । पत्युर्न इतिवदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न । शर्वशब्दे ककारस्य चारितार्थ्यात् नहि तत्र लोपोऽस्ति । न संयोगादिति निषेधात् । तस्मात्ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति स्थितम् । कथं तर्हि ब्रह्माणीति ब्रह्माणमानयति जीवयतीति कर्मण्यण् बोध्यः ॥

क्रीतात् करणपूर्वात् ॥ ५० ॥

क्रीतान्तात्करणपूर्वकात् प्रातिपदिकाददन्तान्ङीष्स्यात् । वस्त्रक्रीती । वस्त्र भिस् क्रीत इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासे अदन्तत्वान्ङीष् । कर्तृकरणे कृतेति सूत्रे बहुलग्रहणात् सुबुत्पत्तौ सत्यां समास इति पक्षे तु सुपः प्रागेवान्तरङ्गत्वादाप् । तेन सा हि तस्य धनक्रीतेति सिद्धम् ।

क्तादल्पाख्यायाम् ॥ ५१ ॥

करणादेः क्तान्तादन्तात्प्रातिपदिकान् ङीष्स्यात्समुदायेनाल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । सूपलिप्ती पात्री ।

बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥

बहुव्रीहेः क्तान्तादन्तोदात्तात्स्त्रियां ङीष् स्यात् । जातिपूर्वादिति वक्तव्यम् । तेन बहुनञ्सुकालसुखादिपूर्वान्न भवति । बहोर्नञ्वदुत्तरपदभूम्नि । नञ्सुभ्याम् । जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः । इति ह्यन्तोदात्तताविधायकानि । तथाचान्तोदात्तादबहुनञ्सुकालसुखादिपूर्वादितिन्यासापेक्षया अन्तोदात्ताज्जातिपूर्वादिति न्यासे लाघवं स्पष्टमेव । उत्तरसूत्रेणास्वाङ्गपूर्वपदाद्विकल्पो वक्ष्यत इति स्वाङ्गपूर्वपद ए-

चात्रोदाहरणम्। ऊरुभिन्नी। नेह। बहुकृता। अकृता। सुकृता। मासजाता। सुखजाता। जातान्तान्न। दन्तजाता। अन्तग्रहणात्सिद्धम्। वर्णादनुदात्तादितिवद्बहुव्रीहेरनुदात्तादित्येव सिद्धे अन्तग्रहणं नित्यप्रतिपत्त्यर्थम्। वा जाते इति तु वैकल्पिक उदात्तो न तु नित्यः। पाणिगृहीती भार्यायाम्। पाणिगृहीताऽन्या। बहुलं ताणि। संज्ञाछन्दसोरित्यर्थः। प्रवद्धाविलूनी। प्रवद्धविलूना। बहुव्रीहिरयम्। कर्मधारय इत्यन्ये।

अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥

पूर्वेण नित्ये प्राप्ते विकल्प आरभ्यते। सुरापीती। सुरापीता। अन्तोदात्तादित्येव। नेह वस्त्रच्छन्ना। अनाच्छादनादित्युदात्तनिषेधः। अत एव पूर्वेणापि न ङीष्।

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तात्प्रातिपदिकाददन्ताद्वा ङीष्स्यात्। केशानतिक्रान्ता अतिकेशी। अतिकेशा। चन्द्रमुखी। चन्द्रमुखा। संयोगोपधात्तु सुगुल्फा। उपसर्जनात्किम्। शिखा। स्वाङ्गन्तु त्रेधा परिभाषितम्। अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्। सुस्वेदा। द्रवत्वात्। सुज्ञाना। अमूर्तत्वात्। सुमुखा शाला। अप्राणिस्थत्वात्। कथं तर्हि फलमुखी कारणमुखी वानवस्थेति। प्रमाद एवायम्। टाबन्तन्तु पाठ्यम्। सुशोफा। विकारजत्वात्। अतत्स्थं तत्र दृष्टं चेति लक्षणान्तरम्। सुकेशी सुकेशी वा रथ्या। तेन चेत्तत्तथायुतम्। सुस्तनी सुस्तना वा प्रतिमा। प्राणिवत् प्राणिसदृशे स्थितत्वात् ॥

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच ॥ ५५ ॥

एभ्यो वा ङीष्स्यात् । पुरस्तादपवादन्यायाद्येननाप्राप्तिन्यायाच्च बह्वज्लक्षणो निषेधो नासिकोदरयोर्बाध्यते । ओष्ठादीनां पश्चा-नान्तु असंयोगोपधादिति बाध्यते । मध्येऽपवादन्यायाद्येननाप्रा-प्तिन्यायाच्च । सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य विधेर्बाधक एव । तुङ्गनासिकी । तुङ्गनासिकेत्यादि । नेह । सहनासिका । अत्र कश्चित् । चकारोऽनुक्तसमुच्चयार्थः । तेन स्वङ्गी स्वङ्गेत्यादि सि-ध्यति । अत एव वृत्तिकृता अङ्गगात्रकण्ठेभ्य इति वक्तव्यमिति पूर्वसूत्रे पाठितमित्याह । भाष्यादनुक्तत्वादप्रमाणमिति प्रामाणि-काः । काश्मीरकबधर्मानाभ्यान्तुस्थूलांत्री स्थूलांत्रेनत्यप्यधिकं संगृहीतम् । अत्र वार्तिकानि । पुछाच्च । सुपुच्छी । सुपुच्छा । कबरमणिविषशरेभ्यो नित्यम् । कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छीत्यादि । उपमानात्पक्षाच्च पुच्छाच्च । नित्यमि-त्येव । उलूकपक्षी । उलूकपुच्छी सेना ।

न क्रोडादिबह्वचः ॥ ५६ ॥

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । स्त्रीलिङ्गोऽयम् । तत्र बहुव्रीहौ पूर्वपदस्य पुंवद्भावः उ-त्तरपदस्योपसर्जनह्रस्वत्वम् । क्रोडा बालखुरोरवाः शफो गुदं भगगलौ चेति पठ्यते । महोदधौ तु । क्रोडवालगलानालभगोखाः खुरसंयुताः । शफो भुजो गुदं घोणाकरौ क्रोडादिनामनीति पठ्यते । न ना क्रोडं भुजान्तरमित्यर्थः । क्रोडः पुंसीति रत्न-मतिः । उखाशब्दस्य कल्याणोखेत्युदाहरणं बोध्यम् । उखा स्फिगिति वर्धमानः । कल्याणनखेति तु वृत्तौ प्रमादः पाठः । नखमुखात् संज्ञायामिति प्रतिषेधात् । असंज्ञायां ङीषन्तत्वात् ।

पद्धथः। सुजघना। सुललाटा।

सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥

सहेत्यादित्रिकपूर्वात् ङीष् न स्यात्। सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका।

नखमुखात् संज्ञायाम् ॥ ५८ ॥

न ङीष्। शूर्पणखा। गौरमुखा। संज्ञायां किम्? ताम्रमुखी कन्या।

दीर्घजिह्वी च छन्दसि ॥ ५९ ॥

संयोगोपधत्वादप्राप्तो ङीष्विधीयते संज्ञायाम्। आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट् ॥

दिक्पूर्वपदान्ङीप् ॥ ६० ॥

दिक्पूर्वपदात् स्वाङ्गान्तात् प्रातिपदिकात् परस्य ङीषो ङीबादेशः स्यात्। प्राङ्मुखी। आद्युदात्तं पदम्। स्वतन्त्रो ङीप्तु न कृतः। प्राग्गुल्फादावतिप्रसङ्गात्। पूर्वोक्तनिषेधानामप्यनुवृत्तावतिगौरवात्। तस्माद्दिक्पूर्वपदादिति पञ्चम्या ङीषिति प्रथमायाः षष्ठीकल्पनमेव ज्यायः।

वाहः ॥ ६१ ॥

वाहन्तात् प्रातिपदिकान्ङीष् स्यात्। ङीपेव स्वर्यते न तु ङीप्। दित्यवाट् च मे दित्यौही च मे। प्रष्ठौही ॥

सख्यशिश्वीति भाषायाम् ॥ ६२ ॥

इतिशब्दः प्रकारे। स च भाषायामित्यस्यानन्तरं द्रष्टव्यः। तेन छन्दस्यपि क्वचित् भाषायां तु नित्यम्। सखी। अशिश्वी। शिशुना विनेत्यमरः। वेदे तूभयम्। सखा सप्त-

दी भव। अशिशुमिवमामयं शरारुरभिमन्यते। आधेनवो धुनन्तामशिश्वीरित्यादि।

जातेरस्त्रीविषयादयोपधात्॥ ६३॥

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष्स्यात्।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥

ग्रहणमिति करणे ल्युट् सामान्ये नपुंसकम्। आकृतिर्ग्रहणं यस्या इति बहुव्रीहिः। अनुगतसंस्थानव्यङ्ग्या जातिरित्यर्थः। मृगी। हंसी। एवमपि वृषलीत्यादि न सिद्ध्यति। वृषले ब्राह्मणादिव्यावृत्तसंस्थानाभावात्। अतो लक्षणान्तरमुक्तम्। लिङ्गानां चेति। सर्वाणि लिङ्गानि न भजतीत्यर्थः। सर्वशब्दस्य लिङ्गापेक्षत्वेपि गमकत्वाद् भजोरिवः समासश्च किमोदनः शालीनामित्यादिवत् लिङ्गानामिति कर्मणि षष्ठी। तेन वृषलीत्यादि सिद्धम्। ब्राह्मणीशब्दे तु प्राप्तो जातिलक्षणो ङीष् शार्ङ्गरवादिपाठान् ङीना बाध्यते। न च मृगीत्यादेरप्यनेन सिद्धेः प्रथमलक्षणवैयर्थ्यं शङ्क्यम्। तटः। तटी। तटमित्याद्यर्थं तस्याप्यावश्यकत्वात्। देवदत्ता देवदत्त इत्यसर्वलिङ्गम्। तेन तत्र द्वितीयलक्षणस्यातिव्याप्तिं वारयितुमाह। सकृदिति। एकस्यां व्यक्तौ कथिता सती व्यक्त्यन्तरे कथनं विनापि सुग्रहेत्यर्थः। न ह्येवं देवदत्तत्वम्। परिमाणभेदेन द्रव्यभेदस्यानभ्युपगमात्। अभ्युपगमे वा समानकालतया व्यक्त्यन्तरस्य विशेषणात्। ब्राह्मणत्वादिस्तु भवत्येवम्। तदीयपितृभ्रात्रादिषु सुग्रहत्वात्। आद्यलक्षणेऽपीदं योज्यम्। तत्रायं विशेषः। एकत्वं नित्यत्वं

वा विवक्ष्यते इति एकत्वे सत्येव ह्येतत्सम्भवति नित्यत्वे च तेन वयसो जातित्वाभावाद्वृद्धा स्थविरेत्यादौ न ङीष् । युवजानिरित्यादौ च जातेश्चेति न पुंवद्भावनिषेधः युवतितरेत्यत्र तु भाष्यकारप्रयोगात् पुंवदित्युक्तं ङ्याप्सूत्रे । एवं च कुमारभार्य इत्येव भवति ।

यत्तु भाष्ये एतल्लक्षणपर्यालोचनया कुमारीभार्य इति भवितव्यमित्युक्तम् । तत्तु प्रथमलक्षणे सकृदित्यादेरन्वयो नास्तीत्यभिप्रेत्य । मतभेदपरं चेति बोध्यम् । अत एव कुमारीशब्दस्य पुंवद्भावोऽपि तत्रैव मतान्तरे उपन्यस्तः । गोत्रश्चेत्यादेरयमर्थः । अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभते । दाक्षी । औपगवी । कठी । बह्वृचीत्यादि । नाडायनन्बह्वृचमिदन्नपुंसकमिति दर्शनात् सर्वलिङ्गौ गोत्रचरणौ । अतः पृथगुपात्तौ । जातेः किम् । मुण्डा । अस्त्रीविषयात् किम् । मक्षिका । वरटा । द्रोणीत्यादयस्तु गौरादिषु बोध्याः । पात्रीत्यत्र तु औणादिके ष्ट्रनि पित्वान्ङीषिति माधवः । अयोपधात्किम् । क्षत्रिया । क्षत्राद्घ इत्यपत्ये घप्रत्ययविधानाद्गोत्रलक्षणा ऽसर्वलिङ्गा वा जातिरियम् । अत्र । वार्त्तिकम् । योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेध इति । गवयी । हयी । मुकयी । मनुषी । हलस्तद्धितस्येति यलोप इति माधवः । मत्सी । सूर्यतिष्येतिसूत्रे मत्स्यस्य ङ्यामिति वक्ष्यते । गौरादिषु हयादय इदानीन्तनैः प्रक्षिप्ता इति वार्त्तिकारम्भाद्विज्ञायते ।

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६४ ॥

स्त्रीविषयत्वात् पूर्वेणाप्राप्ते इदं सूत्रमारभ्यते । एतदेव च पूर्वत्र समानायामाकृतावस्त्रीविषयत्वविवक्षायां प्रमाणम् । यौ-

गिकार्थे एषामपि लिङ्गान्तरसम्भवात् । अत एव द्रोणीत्यादौ गौरादित्वं बोध्यमित्युक्तम् । द्रोणशब्दस्य परिमाणविशेषे पुंस्त्वेऽपि गवादन्यां स्त्रीत्वात् । कुटशब्दस्य घटे पुंस्त्वेऽपि गेहे स्त्रीत्वात् । घटः करीरः कलशः कुटः कुम्भो निपः स्मृत इति हलायुधः । गेहं कुटं मन्दिरमिति स एव । एवञ्च गेहेऽपि अनियतलिङ्गतया जातेरिति ङीषपि सुवचः । यत्तु भाष्ये आकृतिभेदेनापि अस्त्रीविषयतामाश्रित्य समाहितं मालेत्यादौ जातित्वं कल्पितं सोऽयं प्रौढिवादः । प्रकृतमनुसरामः । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते । पुष्पफलमूलोत्तरपदानां येषां नेष्यते तेषां निषेधायेह चत्वारि वार्त्तिकानि । सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः । सम्भस्त्राजिनशणपिण्डेभ्यः फलात् । त्रेश्च । मूलान्नञ इति । एतेऽप्यजादौ प्राक्षिप्ताः ॥

इतो मनुष्यजातेः ॥ ६५ ॥

ङीष्स्यात् । पुनर्जातिग्रहणं योपधादपि स्यादित्येतदर्थम् । उदकमेयमस्य उदमेयः । उदकस्योदः संज्ञायामित्युदादेशः । तस्यापत्यमत इञ् । औदमेयी । अतः किम् । विट् । दरत् । विट्शब्दाज्जनपदशब्दात् क्षत्रियादञ् । दरच्छब्दस्यञ्मगधेत्यण् तयोरतश्चेति लुक् । मनुष्येति किम् । तित्तिरिः । इञ उपसंख्यानम् । अजात्यर्थे । सौतङ्गमी । मौनिचित्ती । सुतङ्गममुनिचित्तशब्दाभ्यां तेन निर्वृत्तमित्यर्थे वुञ्छणादिना चातुरर्थिक इञ् ।

ऊङुतः ॥ ६६ ॥

उकारान्तादयोपधात् प्रातिपदिकान्मनुष्यजातिवाचिनः

स्त्रियामूङ् स्यात् । कुरुनादिभ्यो ण्यः । तस्य स्त्रियामवन्ती-त्यादिना लुक् । ब्रह्मबन्धूः । धीवबन्धूः । वृत्तस्वाध्यायहीनायां ब्राह्मणजातावेतौ बहुव्रीही वर्तेते । ऊङो ङकार ऊङ्धात्वोरिति विशेषणार्थः । दीर्घोच्चारणन्तु श्वश्रूशब्दार्थम् । अन्यत्र सवर्णदीर्घेणापि सिद्धेः । इह सवर्णदीर्घेणोकारान्तरप्रश्लेषेण पुनर्विधानं व्याख्येयम् । तेन ब्रह्मबन्धूरित्यत्र पाक्षिकः शैषिकः कप्न । व्यवस्थितविभाषाविज्ञानाद्वा । अयोपधात्किम् । अध्वर्युर्ब्राह्मणी । अध्वर्युशाखाध्यायिवंशे भवेत्यर्थः । चरणलक्षणेयं जातिः । अध्वरं यातीति विग्रहे मृगय्वादयश्चेत्युणादिषु दर्शनात् कुप्रत्ययः । अध्वरशब्दस्यान्तलोपश्च । अप्राणिजातेश्चारज्वादीनामुपसंख्यानम् । अलाबूः । कर्कन्धूः । यद्यप्येतौ दीर्घान्तावेवोणादिषु व्युत्पादितौ तथापि अलाब्वा कर्कन्ध्वेत्यादौ नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधार्थमूङ्विधानम् । उत इति चेह नापेक्ष्यते । रज्वादिपर्युदासादुवर्णान्तेभ्य एव । प्राणिजातेस्तु कृकवाकुः । रज्वादेस्तु रज्जुः । हनुः ।

बाह्वन्तात् संज्ञायाम् ॥ ६७ ॥

भद्रबाहूः ।

पङ्गोश्च ॥ ६८ ॥

पङ्गूः ॥ श्वशुरस्योकाराकारलोपश्च । श्वशुरस्य स्त्री श्वश्रूः । पुंयोगलक्षणस्य ङीषो ऽपवादः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् स्वादयः ।

ऊरूत्तरपदादौपम्ये ॥ ६९ ॥

उपमीयतेऽनया इत्युपमानं तदेव औपम्यम् । उपमानवाचि पूर्वपदं यत् प्रातिपदिकं तस्मादूङ् स्यात् ॥ कदलीस्तम्भोरूः । उपमानाभावान्नेह । वृत्तोरुः । कथं तर्हि । पीवरोरु पिबती बर्हिण

इति कुमारः । संज्ञापूर्वकस्य विधेरनित्यत्वात् संबुद्धिप्रयुक्तगुणाभावो बोध्यः। एतेन विहर मया सह भीरु कामिनीति व्याख्यातम् । श्रीकण्ठपुरुषोत्तमादयस्तु स्त्रीजातिविशेषवाची भीरुशब्दस्तस्मादूङुत इत्यूङमाहुः । कथं तर्हि । विशेषस्त्वङ्गना भीरुरित्यमरः । सपदि वारिधरारवभीरव इति माघश्च । मनुष्यत्वाविवक्षायां नोङ् । मनुष्यजातेरित्यनुवृत्तेः भियः क्रुक्लुकनाविति क्रौ क्रियाशब्दो वा । अत एव वारिधरारवस्य भीत्रार्थानामित्यपादानकारकतेति दिक् । ऊर्वन्तादिति ऊरोरिति वा वक्तव्ये उत्तरपदग्रहणं हस्तशुनोरुरित्यादौ पदान्तरव्यवधाने मा भूदित्येतदर्थम् । अत एव धात्री कराभ्यां करभोपमोरूरिति रघुकाव्ये दीर्घपाठः क्वचित्कः प्रामादिकः । विचकरेचकरेणुकरोरुभिरिति माघे तु प्रमाद एव । करेण वरोरुभिरिति वा पठनीयमिति हरदत्तः ।

संहितशफलक्षणवामादेश्च ॥ ७० ॥

अनौपम्यार्थं सूत्रम् । संहितोरूः । सैव शफोरूः । शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात् । लक्षणशब्द अर्शआद्यजन्तः । लक्षणोरूः । वामौ सुन्दरौ ऊरू यस्याः सा वामोरूः । सहितसहाभ्यां चेति वक्तव्यम् । सहितोरूः । समो वा हिततयोरिति व्युत्पादितस्य सहितशब्दस्य नेह ग्रहणम् । एकदेशविकृततया संहितग्रहणादेव सिद्धेः । किन्तु सह हितेन वर्तते इति व्युत्पादितस्य ग्रहणम् । सहोरूः । सहेते इति सहौ तादृशावुरू यस्याः सा । यद्वा । विद्यमानवचनस्य सहशब्दस्य उर्वतिशयप्रतिपादनाय प्रयोगः ।

कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥

आभ्यामूङ् स्यात् । कद्रूश्च वै सुपर्णी च । कमण्डलूः ॥ गु-

गुल्गुलमधुजतुपतयालूनामुपसंख्यानम् । तत्राद्यानां त्रयाणां छन्दासि व्यत्ययेन क्लीत्वम् । पतयालुस्तु स्पृहिगृहीत्यालुजन्तो विशेष्यलिङ्गः । गुग्गुलूः । मधूः । जतूः । पतयालूः ।

संज्ञायाम् ॥ ७२ ॥

अच्छन्दोऽर्थं सूत्रम् । कद्रूः । कमण्डलूः ।

शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात् ॥ शार्ङ्गरवी । बैदी । जातेरित्यनुवृत्तेः पुंयोगे ङीषेव । जातिलक्षण एव परं ङीना बाध्यते ॥ अत्राकारविशेषणान्नेह । शूरसेनी ॥ जनपदशब्दादित्यञोऽतश्चेति लुकि जातिलक्षणो ङीष् । अत एव यौधेय्यां ङीन्सिध्यर्थं न प्राच्यभर्गादियौधेयादिभ्य इति सूत्रेणातश्चेति प्राप्तो लुङ् निषिध्यते । ततः पर्श्वादियौधेयादिभ्यो ऽणञाविति पाश्चमिकस्य स्वार्थिकस्याञो लुगभावादनेन ङीन् सिध्यतीति कैयटादिग्रन्थे चरणसमाप्तौ स्पष्टम् । शार्ङ्गरव । कापटव । ब्राह्मण । गौग्गुलव । शृङ्गरु कपटु ब्रह्मन् गुग्गुलु एभ्यः प्राग्दीव्यतोऽण् । गौतम ऋष्यणन्तः । अयं च गौरादिष्वपि पठितः । कामण्डलेय । कमण्डलुशब्दाच्चतुष्पाद्भ्यो ढञ् । ब्राह्मणकृतेय । आतिथेय । आङ्गरकेय । एते शुभ्रादिढगन्ताः । वात्सायन । वत्सशब्दाद् गर्गादियञ् । ततो यूनि यञिञोश्चेति फक् । यद्यपि स्त्रियां युवसंज्ञा नास्ति तथापि वात्सायनशब्दस्येह गणे पाठसामर्थ्यात् स्त्रियामपि युवसंज्ञा । गोत्रे एव वा प्रत्ययद्वयम् । मौञ्जायन । मुञ्जशब्दो नडादिः । कैकसेय । कीकसाशब्दः शुभ्रादिः । काप्य । शैब्य । कापिशिविभ्यां वृद्धेत्कोसलाजादाञ्ञ्यङ् । यङश्चावत्र प्राप्नोति । ऐहि । पर्येहि । इह चेष्टायाम् ।

आङ्पूर्वात् पर्याङ्पूर्वाच्च सर्वधातुभ्य इति इन् । इह कृदिकारादिति ङीष् प्राप्तः । आश्मरथ्य । अश्मरथो गर्गादिः । औदपान । उदपानशब्दः शुण्डिकादिः उत्सादिश्च । तत्र शुण्डिकाद्यणन्तः प्रयोजयति। अञन्ते तु ङीष्ङीनोर्नास्ति विशेषः। अराल चण्डाल। वतण्ड। आद्ययोरसर्वलिङ्गत्वाज्जातित्वम् । वतण्डस्य तु गोत्रत्वात् । वतण्डस्यापत्यं स्त्री वतण्डाचेति यञ् । लुक् स्त्रियामिति तस्य लुक् । भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् । ननु भोगशब्दो घञन्तः । गौरिशब्दो अत इञन्तः । तौ ञित्स्वरेणाद्युदात्तौ ताभ्यां मतुप् पित्वादनुदात्तः ततश्च ङीप्ङीनोः को विशेष इत्याशङ्क्योक्तं वृत्तिकारैः । घादिषु नित्यमिति । तेषामयमाशयः । कर्मणि चेत्यत्रेव नद्याः शेषस्यान्यतरस्यामुगितश्चेति चकार इतिशब्दार्थः । तेन उगितः परोऽपि ङीन् नास्य विषयः । उगित्संशब्देनाविहितत्वात् । तथा च घरूपेति नित्यह्रस्वः सिध्यति । भाष्ये तु उगितः परा या नदीत्येव स्थितं युवोरनाकाविति सूत्रे । अत्र गणसूत्रं नृनरयोर्वृद्धिश्चेति । नृशब्दादृन्नेभ्य इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम् । यदिह वक्तव्यं तत्स्थानेन्तरतम इत्यत्रावोचाम । अत्र पुत्रशब्दः पठ्यते तेन शैलपुत्री । मा भैषीः पुत्रि सीते । पुत्रीव हर्षं हृदये करोतीत्यादिसिद्धम् । पुत्रशब्दश्च कन्यायामप्यस्ति । अत एव पुमांसं पुत्रमाधेहि । पुंसः पुत्रां उत विश्वायुषमित्यादौ पुंस्त्वेन विशेषणं संगच्छते । अमरोऽप्याह । आत्मजस्तनयः सूनुः सुतः पुत्रस्त्रियां त्वमी आहुर्दुहितरं सर्वे इति । यत्त्वत्र हरदत्तेनोक्तं केवलः पुत्रशब्दः स्त्रियां न वर्तते इति तत्प्रत्ययस्थादितीत्वप्रकरणस्थवासूतकापुत्रकावृन्दारकाणामिति वार्तिकभाष्यादिविरुद्धम् । ननु षष्ठे कारे सत्यामदस्येति सूत्रे सूतोग्रराज

भोजकुलमेरुभ्यो दुहितुः पुत्रड्वेति वार्तिकं तत्स्वरार्थमित्येके। टित्वान्ङीपि कृते उदात्तनिवृत्तिस्वरेणोदात्तः। ङीनन्तेनं तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति दुरुपपादोऽत्र स्वरभेदः। अतो नारभ्यमेव वार्तिकमित्यन्ये। वार्तिकश्रद्धयात्र गणे पुत्रशब्दः प्रक्षिप्तो न तु सांप्रदायिक इत्यन्ये तेषामुक्तप्रयोगाः प्रामादिकाः। यद्वा पुत्रेत्याख्याताात्तद्वन्तं करोतीति वा रायन्ताद्च इः। कृदिकारान्ङीपिति कथंचिन्निर्वाह्यम्। अस्मिन् पक्षे वा सूतकापुत्रकेति वार्तिके कैयटहरदत्तादिकृतोऽकारप्रश्लेपक्लेशो नास्तीति दिक्।

## यङश्चाप् ॥ ७४ ॥

ञ्यङ्ष्यङोः सामान्यग्रहणं यङ इति। तदन्ताच्चाप्स्यात्। पकारः सामान्यग्रहणार्थः। चकारस्य तदविघातेन चरितार्थत्वेऽपि परत्वाच्चित्स्वरं बाधते। आम्बष्ठ्या। वृद्धेत्कोसलेति ञ्यङ्। कारीषगन्ध्या। ष्यङः स्त्रीप्रत्ययत्वेऽपि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। अत्र वार्तिकम्। षाच्च यङश्चाविति। शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। शर्कराक्षपूतिमाषगोकक्षशब्दा गर्गादयः। एवं च गौकक्ष्यशब्दस्य क्रौड्यादिषु पाठो न कर्तव्यः। नन्वेवं गौकक्षीपुत्र इत्यत्र ष्यङः संप्रसारणं पुत्रपत्योरिति संप्रसारणं न स्यात्। ष्यङन्ततताविरहादिति चेन्न। इष्टापत्तेः। तथाच सौनागाः पठन्ति। ष्यङः संप्रसारणे गौकक्ष्यायाः प्रतिषेध इति।

## आवट्याच्च ॥ ७५ ॥

अस्माच्चाप्स्यात्। आवट्या। अवटशब्दो गर्गादिः। तस्माद्यञ्। यञश्चेति ङीप्प्राप्तः। प्राचां तु मते ष्फ एव सर्वत्र ग्रहणा-

पकर्षणादित्युक्तम् । आवट्यायनी ।

तद्धिताः ॥ ७६ ॥

आ पञ्चमाध्यायसमाप्तेराधिकृतं बोध्यम् । बहुवचनमनुक्तानामुपसंख्येयानां संग्रहार्थम् । अन्यथा प्रत्यय इतिवत्ताद्धित इत्येव ब्रूयात् । ननु स्त्रीप्रत्ययानामुपक्रम एव ताद्धिता इत्याधिक्रियताम् । तथाच ष्फविधौ ताद्धितग्रहणं यस्येतिलोपे ईद्ग्रहणं च मास्त्विति लाघवम् । सत्यम् । एवं सति ङीवादीनां ङकारस्येत्संज्ञा न स्यात् । अताद्धित इति पर्युदासात् । ङकारस्थाने टकारोऽस्त्विति चेन्न । एवमपि पट्वीत्यादावोर्गुणप्रसङ्गात् ।

यूनस्तिः ॥ ७७ ॥

युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः॥ स्त्रियां तद्धितान्तत्वात् प्रातिपदिकत्वे स्वादयः । युवतिः । लिङ्गविशिष्टपरिभाषया सिद्धेऽप्युत्तरार्थस्ताद्धिताधिकारः । अथ कथं प्रौढभावा युवत्य इति । युवतीकरनिर्मथितं मथितमिति च । न चेतो मनुष्यजातेरिति ङीषि वाच्यम् । यौवनं न जातिरित्युक्तत्वात् । अन्यथा ह्रस्वप्रयोगासङ्गतेश्च । उच्यते । सर्वतो क्तिन्नर्थादिति बह्वाद्यन्तर्गणसूत्राद्वैकल्पिको ङीष् । उक्तेऽपि भवन्त्येत इति भाष्यात् । अन्ये त्वाहुः यौतेरौणादिके कतिप्रत्यये कृदिकारादिति ङीषिति । यौतेः शत्रन्तान्ङीबिति वा । अत एव युवतीनां समूहो यौवतमित्यपि सङ्गच्छते । त्यन्तात्तु अणि पुंवद्भावाद्यौवनमित्येव । भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिस्तु भाष्यविरुद्धा । भाष्ये भिक्षादिषु युवतिशब्दपाठस्य प्रत्याख्यानात् ।

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

त्र्यादीनामन्त्यमुत्तमम् । तत्रैव रूढेः । तस्य समीपमुपो-

त्तमम् । गोत्रे विहितावनार्षौ यावणिञौ तदन्ताभ्यां गुरूपोत्तमाभ्यां ष्यङ्प्रत्ययः स्यात्स्त्रियाम् । षष्ठी तु पञ्चम्यर्थे सौत्री गापोष्टक् व्रीहिशाल्योर्ढगितिवत् । अत एवोत्तरसूत्रे पञ्चमी निर्दिष्टा । क्रौड्यादिभ्यश्चेति । यद्वा । अणिञन्तस्य ष्यङादेशः स्यादिति सूत्रार्थः । नचैवं तातङ्न्यायेन सर्वादेशता शङ्क्या निर्दिश्यमानस्यादेशा भवन्तीत्युक्तेः । करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या । तस्यापत्यमित्यणः ष्यङ् । वाराह्या । वालाक्या । इञः ष्यङ् । अणिञोरिति किम् । आर्तभागस्यापत्यं विदादित्वादञ् । आर्त्तभागी । अनार्षयोः किम् । वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम् । औपगवी । गोत्रे किम् । तत्र जाता आहिच्छत्री । कान्यकुब्जी । यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रमिति वुञ्विधौ राजन्यमनुष्यग्रहणेन ज्ञापयिष्यते तथापि अनार्षयोरिति पर्युदासादेव सिद्धे गोत्रग्रहणसामर्थ्याच्छास्त्रीयस्यैव गोत्रस्येह ग्रहणमिति प्राञ्चः । वस्तुतस्तु मा स्तु गोत्रग्रहणं अस्तु च लौकिकस्य पर्युदासाल्लाभः । दैवदत्त्या याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात् । एतदर्थमेव हि भाष्ये गोत्रादवयुतः पृथग्भूतः पर्युदासादनन्तरापत्यमिति व्याख्यानान्तरमुत्तरसूत्रस्य कृतम् । वृत्तौ च क्रौड्यादिषु दैवदत्त्यादयो द्रष्टव्या इत्युक्तम् । अतिप्रसङ्गस्त्वनभिधानान्नेति सर्वेषां तुल्यमेव । यद्यपि ष्यङ् आदेश इति पक्षेऽपि लक्ष्यं सिद्ध्यत्येव तथापि प्रत्ययपक्षे षकार इह सूत्रे ष्यङः सम्प्रसारणमिति सूत्रे च न कर्तव्य इति लाघवम् । पक्षान्तरे तु गौरवमिति स्थितं भाष्ये । तथाच तत्सङ्ग्राहका हरदत्तश्लोकाः ।

पुंवद्भावाद्यजादौ यलुगणपि परस्मिन् ष्याङि ह्यौदमेघे

स्वार्थे ष्यङ्ङ् तद्यलुग्डे क्रमत इह भवेदौडुलोम्या परस्मिन् ।
ष्यङ्ङ्शीर्षाधीनलाभस्तदभिविहितये न प्रभूर्ह्यस्ति शीर्ष्यो
मत्रादेशोऽपि तातङ्ङिव न यङणिञोः स्थानिनोरुक्तिहेतोः ॥१॥
स्त्र्युक्तात्वप्पाप्परास्मिन्निह सुलभ इति षूङौ विधेयौ न वा ये
ऽणादेशे ङीनिवृत्त्यै त्वण इञ् इति चेद्वौ विशेष्यौ न दोषः ।
ञित्वादादेरुदात्तः प्रसजति साकादेशने वृध्यभावः
पाश्यापुत्रे निवृत्यै यण इक इह षेत्वेकके ङीस्पङोस्तु ॥ २ ॥
लोल्यापुत्र इत्यव्यवहित इतरत्रापि दीर्घो तवत्स्याद्-
धुत्वानन्तर्ययोगे विधिरिति स यथानन्तरेऽधौ तथा धोः ।
धात्वानन्तर्ययोश्चेन्मिथ इह निहिते पेक्षिता वाक्पताविक्
धोर्नात्राधिक्रियात्वे ह्युपदिशिरिति गोर्नोतदेवं ममैकः ॥ ३ ॥
एषामयमर्थः । ष्यङि परस्मिन् सति प्रत्ययत्वपक्षे इति यावत्
यजादौ पुंवद्भावात् । भस्याढ इत्यनेन । यलुक् यलोपः
अण् च सिध्यति । औदमेध्यायाश्छात्र औदमेघानां सङ्घो वा
औदमेघ इति हीष्यते तच्चोभयमादेशपक्षे स्थानिवद्भावेन इञ-
न्ततया इञश्च सङ्घाङ्कलक्षणेष्विञितिसूत्राभ्यामाणि आपत्यस्येति
यलोपे च सिद्ध्यतीति स्पष्टमेव । प्रत्ययत्वपक्षे त्विञन्तत्वाभा-
वाद्द्विरण् विधेयः । अथ लिङ्गविशिष्टपरिभाषया इञन्ताद्विहि-
तोऽण् ष्यङन्तात् स्यात् एवमपि अनपत्यत्वाद्यलोपानुपपत्तिरिति
दूषणं प्रसक्तम् । तत्रायमुद्धारः । भस्याढे तद्धिते पुंवद्भावः
सिद्धश्च प्रत्ययविधाविति प्रागेव शैषिकोत्पत्तेः पुंवद्भावेन
ष्यङ्निवृत्ताविञन्तत्वादुभयत्राण् इति । स्यादेतत् । प्रत्यय-
त्वपक्षे औदमेघेयो न सिध्यति । अनपत्यतया यलोपासम्भ-
वात् । अढ इति पुंवद्भावपर्युदासाच्चेत्यत आह । हीति ।
हि यस्मात्स्त्रियां विद्यमानात्प्रातिपदिकात्स्वार्थे टाबादय इति

व्याख्यानादौदमेघेः स्वार्थे ष्यङ् । इञन्तस्य स्वार्थश्चापत्यं तत्तस्मात् ढे यलुपूयलोपः । आपत्यत्वादिति भावः । तदेवं प्रत्ययत्वपक्षो निर्दोष इति स्थितम् । नन्वादेशत्वपक्षे औडुलोम्या न सिध्येत् । ये चाभावकर्मणोरिति प्रकृतिभावात् । अत आह क्रमत इति । अपरस्मिन् पक्षान्तरे आदेशत्वपक्षे इति यावत् । अकृते टिलोपे गुरूपोत्तमत्वाभावात् ष्यङत्र नास्ति । तथा चानुपूर्व्यात् सिद्धमिति भावः । स्यादेतत् । हास्तिशिरसापत्यम् । बाह्वादित्वादिञ् । ये च तद्धितइति सूत्रोपरि प्रक्षिप्य वृत्तिकृद्भिर्व्याख्यायमानेनाचिशीर्ष इति वार्तिकेन शीर्षादेशः । इञः ष्यङ् । ततः स्थानिवद्भावेन शीर्षशब्दस्य शिरोग्रहणेन ग्रहणाद्ये च तद्धित इति शीर्षन्नादेशः स्यात् । ये चाभावेति प्रकृतिभावाच्च टिलोपो दुर्लभः । तत्राह । ष्याङिति । तथा च सन्निपातपरिभाषया ष्यङ् शीर्षादेशं न विहन्ति । तेन हास्तिशीर्ष्यासिद्धे चेत्यर्थः । न चैवमजादिप्रत्ययनिबन्धनः शीर्षादेशः ष्यङं न प्रवर्तयेदिति वाच्यम् । परिभाषया अनित्यतया लक्ष्यानुरोधेन ष्यङ् प्रवर्त्तते न तु शीर्षन्नित्यभ्युपगमात् । ननु प्रत्ययग्रहणपरिभाषया अणिञन्तयोर्विधीयमानः ष्यङ् अनेकाल्त्वात्सर्वादेशः स्यात् । ङिच्चेत्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात् । ष्यङि तु ङित्वं यङश्चाबिति विशेषणेन चरितार्थं तत्राह । सर्वेति । निर्दिश्यमानस्येति परिभाषयेति भावः । इत्थमादेशपक्षेऽपि दोषोद्धारात्पक्षयोः साम्यं स्थितम् । ननु प्रत्ययपक्षेऽनुबन्धौ न कार्यौ । चाप् न विधेयः । टापा सिद्धेः । आदेशपक्षे तु अणन्तान्ङीप्स्यात् । इञन्तान् ङीष् । तयोर्बाधाय चाब्विधिराश्रयणीयः तथाचानुबन्धावपि कार्याविति गौरवमिति शङ्कते । स्त्र्युक्ताबपीति । परस्मिन् प्रत्ययपक्षे षृङौ

न विधेयौ चाब् च न विधेय इति पूर्वोत्तराभ्यां नञः सम्बन्धः। विधेयशब्दस्य च वचनविपरिणामः। गार्ग्यायरायादाविव स्त्रीप्रत्ययद्वयं भविष्यतीति भावः। आदेशपक्षेऽपि तर्ह्यनुबन्धं मास्त्वित्याह। अपीति। इश्च अश्च यौ। अण्योऽकारः इञ् इकार इति व्याख्यास्यते । अलुविधित्वान्न स्थानिवत्त्वम् । टिड्ढाणञित्यत्र ह्यत इत्यनुवर्तते । इञ उपसंख्यानमित्यत्रापि सौत्रमित इति सम्बध्यते। यद्यपि प्रपठ्येत्यादाविडभावायाप्राधान्येनाप्यलाश्रयणे स्थानिवत्त्वं नेति सिद्धान्तितम् । तथाचेकारान्तो य इञिति व्याख्यानेऽपि न दोषस्तथापि अण् योऽकार इत्यावश्यकम् । अन्यथा स्थानिवत्त्वेनाणत्वं स्वाश्रयमाकारान्तत्वं चाश्रित्य ङीप्स्यात् । यथा वृक्षायेत्यादौ स्वाश्रयं यञादित्वमाश्रित्य दीर्घ इति भावः । आदेशपक्षे दोषमाह। ञित्वादिति । इञादेशस्येति शेषः । तथाचान्तोदात्तसिद्ध्यर्थं आदेशवादिना चाबेव वैष्टव्यः । तथा षङावप्यासञ्जनीयावित्यर्थः । स्यादेतत् । सानुबन्धकस्य स्थानिवत्त्वेन निर्देशे अनुबन्धकार्यतेति गाङ्कुटिदीति सूत्रे उक्तम् । तथाच । ञित्स्वरो न भविष्यतीत्याशङ्क्याह । सत्रकेति। तथाच । तस्मिन्नेव सूत्रे हलः श्नः शानजिति सूत्रे चोक्तपक्षो दूषित एव। तदभ्युपगमेऽपि न निर्वाहः। वृद्धेरप्यसिद्धिप्रसङ्गात्। ननु प्रत्ययत्वपक्षेऽपि सम्प्रसारणविधौ ष्यङ इति विशेषणार्थमनुबन्धावावश्यकावित्याशङ्क्याह। पाश्येति। ष्यङः सम्प्रसारणमित्येव प्रत्ययपक्षेऽप्यस्तु । तावतापि पाश्यापुत्रे सम्प्रसारणनिवृत्तेरित्यर्थः । त्वया तु यङश्चावित्यत्र सामान्यग्रहणाविघाताय षकारोऽपि कार्य इति गौरवमिति भावः। ननु प्रत्ययपक्षे लोलूयापुत्रेऽपि सम्प्रसारणं स्यादित्याशङ्क्याह । लोलूयेति। आदिति। अप्रत्यया-

दित्यकारेऽतोलोपे टापा सह सवर्णदीर्घे च कृते अकारेण व्यवधानादित्यर्थः । शङ्कते । इतरत्रापीति । वाराहीपुत्र इत्यत्रापि टापा व्यवधानं तुल्यमित्यर्थः । समाधत्ते दीर्घ इति । न चैवमपि स्थानिवद्भावाद्व्यवधानमेवेति वाच्यम् । एकादेशस्य पूर्वान्ततयाहि याशब्दस्य विधिः । न चासावनादिष्टादचः पूर्वः येन स्थानिवत्त्वं स्यादिति भावः । आदेशवाद्याह धुत्वेति । धुत्वं धातुत्वम् । अधाविति छेदः । अयं भावः । आदेच इत्यात्वस्य गोशब्दादावतिप्रसङ्गं वारयितुं धातुग्रहणमनुवर्त्त्यम् । तस्य चेहापि सम्बन्धध्रौव्ये । योनन्तरो न धातुः स यो धातुः सोननन्तर इति भाष्योक्तरीत्याऽधातौ वाराहीपुत्र इत्यत्रेवानन्तरे लोलूयापुत्रेऽप्यतिप्रसङ्गो दुर्वारः । अथ यङ्धात्वोर्विशेषणविशेष्यभावानापन्नयोः कार्यान्वयस्तर्हि लोलूयापुत्रः सिध्यतु नाम । वाक्पतौ तु इक् स्यात् । तस्माद्धातुग्रहणं स्वतन्त्रमस्वतन्त्रं वा । उभयथापि प्रत्ययवादिनो दोष इति भावः । प्रत्ययवादी समाधत्ते धो नेति । गोर्नौ । गोशब्दस्यात्त्वं नेत्यर्थः । आत्वे हीति । प्रातिपदिकानान्तु अवयवशो व्युत्पादनरूप उद्देशो नतु साक्षात्पाठरूप उपदेश इति भावः । स्यादेतत् । नौद्व्यचष्ठन् । गोद्व्यचोसंख्येत्यादावस्त्येवोपदेशः । न च स्वरूपज्ञापनमात्रफलकः स नास्तीति वाच्यम् । धातूनामपि विकरणानुबन्धादिज्ञापनफलकत्वात् । न च औतौ-म्शसोरिति ज्ञापकम् । स्मृत ऊरुर्वा येन सः स्मृतौः । तं स्मृतामित्यत्र चारितार्थ्यात् । न च गोतो णिदिति ज्ञापकम् । तत्राप्योकारान्तोपलक्षणतया स्मृताः । स्मृतावावित्यत्र चरितार्थत्वात् । उच्यते । रायो हलीत्यत्र । राय इति योगविभागस्तावद्भाष्यारूढ एव तत्र राय एव प्रातिपदिकस्य नान्यस्येति

नियमो बोध्यः । अस्ति ऊडिदम्पदादीति सूत्रे राय उपदेशः मण्डूकप्लुत्या धातुग्रहणस्येह सम्बन्धो नेति वा बोध्यम् । उपसंहरति । तदेवमिति । मम प्रत्ययवादिनः । एकः । ङकारः । आदेशवादिनस्तु षकारोऽपीति गौरवमिति भावः ।

गोत्रावयवात् ॥ ७९ ॥

प्रवराध्याये यमधिकृत्य प्रवरा आम्नातास्तद्गोत्रम् । प्रवरान् व्याख्यास्यामस्तैर्गोत्राणीति सत्याषाढसूत्रात् । तस्मादवयुतं पृथग्भूतं पर्युदासात्कुलप्रतिष्ठाकरम् । पुणिकभुणिकमुखरादि । एतद्धि देशविशेषे प्रसिद्धं नामेत्याहुः । प्रसिद्धिप्रयोजकाव परयोरणिञोः ष्यङ् स्यात् । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या ।

क्रौड्यादिभ्यश्च ॥ ८० ॥

अगुरूपोत्तमार्थमनाणिञर्थं च सूत्रम् । क्रौडिः । क्रौड्या । गौकक्ष्या । इहास्य पाठः प्रागेव प्रत्याख्यातः । इह सूत युवत्यामिति पठ्यते । सूतशब्दः ष्यङमुत्पादयति प्राप्तयौवनायामभिधेयायाम् । सूत्या । अन्यत्र क्रियाशब्दादाप् । सूतजातिवाचिनस्तु ङीष् । सूती । भोज क्षत्रिये । भोज्या । जातिलक्षणस्य ङीषोऽपवादः । क्रियाशब्दात्तु टाबेव भोजा । क्रौड्यादिराकृतिगणः । व्याकरणान्तरे त्वयमेव रूढ्यादिरिति भाष्यम् ॥

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्यो-
ऽन्यतरस्याम् ॥ ८१ ॥

एभ्यः ष्यङ् वा स्यात् । इञन्तत्वात्पक्षे ङीष् । देवा यज्ञा यष्टव्या अस्य देवयज्ञः । शुचिर्वृक्षोऽस्य शुचिवृक्षः । सत्यमुग्र-

तनाद्विशेष्यस्य पूर्वनिपातः सुमागमश्च काण्डेन विद्धः। कर्तृकरणे कृतेति समासः। निपातनात् काण्डशब्दस्यैकारः। पाठान्तरे तु कण्ठे विद्धमस्य कण्ठे वा विद्धः कण्ठेविद्धः। अमूर्धमस्तकादित्यलुक्। सर्वेभ्योऽपत्ये ऽत इञ्। दैवयज्या। दैवयजी। शौचिवृक्ष्या। शौचिवृक्षी। सात्यमुग्र्या। सात्यमुग्री। काण्ठेविध्या। काण्ठेविद्धी।

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्।

## समर्थानां प्रथमाद्वा ॥ ८२ ॥

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् समर्थाधिकार इति वृत्तिकाराः। तदुत्तरेषां स्वार्थिकत्वेन सामर्थ्यायोगादिति तेषां भावः। अत एव कंबल उपगोरपत्यं देवदत्तस्येति समर्थग्रहणप्रत्युदाहरणं वृत्तौ दत्तम्। अत्रेदं वक्तव्यम्। समर्थः पदविधिरिति परिभाषया गतार्थत्वान्न प्रकृतसूत्रे एकार्थीभावरूप सामर्थ्यमर्थः घकालतनेषु कालनाम्न इत्यलुग्विधानाद्धि सुबन्तात्तद्धितोत्पत्तिः। तथा च पदविधित्वं स्पष्टमेव। किमर्थं तर्ह्ययं समर्थाधिकार इति चेत्। समर्थात्परिनिष्ठितात् कृतसन्धेस्तद्धितो यथा स्यात्। तेन सौत्थितिर्वीक्षमाणिरिति सिद्धम्। सु उत्थित वि ईक्षमाण इत्यस्यामवस्थायां सवर्णदीर्घात्प्रागेव तद्धिते सति हि सावुत्थितिर्वाबीक्षमाणिरिति स्यात्। नन्वन्तरङ्गत्वात् सिद्धो दीर्घः। सत्यम्। अत एवानेन समर्थग्रहणेनाकृतव्यूहाः पाणिनीया इति ज्ञाप्यते कृतमपि निवर्तयन्तीति वा। तेन लुलुवुष इत्यादि सिद्धम्। संप्रसारणं भावीति ज्ञात्वा प्रागेव वलादिलक्षण-

स्य इटोऽकरणात् कृतस्य वा निवर्तनात् । अनित्यं चेदं परिभाषाद्वयमिति प्रतिपादितमचः परस्मिन्निति सूत्रे तत्र वि-स्मर्त्तव्यम् । परिनिष्ठितत्वं च ङ्याप्प्रातिपदिकांश एव न तु सुब्विशिष्ट इत्यप्यवधेयम् । तेन दण्डिमानित्यादि सिद्धम् । अत्र चाश्विमानणिति सौत्रप्रयोगो ज्ञापकः । एवं च नङो ङित्वस्य चोक्तपरिभाषाज्ञापकत्वसम्भवात् समर्थग्रहणं प्रत्याख्यातमचः परस्मिन्नित्यत्र । क्रियमाणेऽपि समर्थात्प्रथमादिति युक्तं वक्तुम् । प्रथमात्किम् । विधिवाक्ये प्रथमावगताद्यथा स्यात् । तस्यापत्यमित्यण् अपत्यवाचकात्प्रथमान्तात्तस्येति षष्ठ्यर्थान्मा भूत् । वाग्रहणात् पक्षे वाक्यमपि । उपगोरपत्यमिति । ननु वैकल्पिको ऽपि एकार्थीभावस्तस्मिन् सति नित्यं भवन् तद्धितः समासं बाधेत । मैवम् । पूर्वसूत्राद-न्यतरस्यांग्रहणानुवृत्त्या एकार्थीभावपक्षेऽपि विकल्पेन तद्धितः स्यादिति व्याख्यानात् । तेनोपग्वपत्यमित्यपि सिद्धम् ।

प्राग्दीव्यतोऽण् ॥ ८३ ॥

अधिकारोऽयम् । तेन दीव्यतीत्यत्रत्य एकदेशोऽनर्थकोऽप्य-वधित्वेनोपात्तः प्राग्रीश्वरादितिवत् । यद्वा दीव्यत इति शत्रन्तम् । तेन देवनकर्ता अर्थ एवावधिः । प्रत्यय इतिवदणित्येव वक्तव्ये प्राग्दीव्यत इति स्पष्टार्थम् ।

अश्वपत्यादिभ्यश्च ॥ ८४ ॥

एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य रायस्यापवादः । आश्वपतम् । अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । पशुपति । धान्यपति । बन्धुपति । सभापति । प्राणपति । क्षेत्रपति । कथं तर्हि ।

गाणपत्यो मन्त्रः । क्षैत्रपत्यमिति । अपशब्द एवायमिति हरदत्तः । क्षैत्रपत्यश्चरुं निर्वपेदिति तु छान्दसम् । क्षैत्रपत्यं प्राश्नन्तीति तु छन्दोवद्दषयः कुर्वन्ति ।

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥

दित्यादिभ्यः पत्युत्तरपदाच्च ण्यः स्यादणोऽपवादः । दैत्यः । आदित्यः । प्राजापत्यः । यमाच्चेति वक्तव्यमिति वृत्तिः । हरदत्तमाधवादयोऽप्येवम् । भाष्ये तु नैतद्दृश्यते । वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् । वाच्यः । मात्यः । पैतृमत्यः । कुर्वादिषु मतिपितृमच्छब्दयोः पाठोऽपत्यार्थे भाषायामपि ण्यार्थः । अनेन तु छन्दसि सर्वेषु प्राग्दीव्यतीयेषु ण्यविधिः । पृथिव्या ञाञौ । पार्थिवा । पार्थिवी । देवस्य यञञौ । दैव्यम् । दैवम् । वहिषष्टिलोपो यञ्च । वाह्यः । ईकक् च । वाहीकः । ईकञ् छन्दसि । वाहीकमस्तु भद्रं वः । स्थाम्नोऽकारः । अश्वत्थामः । भाष्योदाहरणादत्र तदन्तविधिः । अन्यथा बलवाचिनः स्थामन्शब्दस्य केवलस्यापत्येन योगाभावेऽपि जातादिष्वेव विधिः स्यात् । अश्वस्येव स्थाम यस्येति बहुव्रीहौ पृषोदरादित्वात्सस्य तः । भवार्थे त्वस्य लुग्वक्ष्यते । अश्वत्थामा । लोम्नोऽपत्येषु बहुषु । बाह्वादित्वादिञि प्राप्तेऽकारो विधीयते । उडुलोमाः । शरलोमाः । उडुलोमान् । उडुलोमैः । बहुषु किम् । औडुलोमिः । औडुलोमी । सर्वत्र गोरजादिप्रसङ्गे यत् । न केवलमयमपत्य एव किन्तु सर्वेषु प्राग्दीव्यतीयेषु । गवि भवं गव्यम् । गोरिदं गोः स्वं गौर्देवताऽस्य स्थालीपाकस्य गव्यः । केचित्तु प्राग्दीव्यतीये अन्यत्र चेति सर्वत्रेत्यस्यार्थमाहुः । गवा चरति गव्यः । अजादिप्रसङ्गे किम् । गोभ्यो

हेतुभ्य आगतं गोरूप्यम् । गोमयम् । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः मयट् चेति रूप्यमयटौ । ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषिद्धम् । रायादीनामवकाशः दितिर्देवताऽस्य दैत्यः । इतश्चानिञ इत्यस्यावकाशः दुलेरपत्यं दौलेयः । दितेरपत्यं दैत्य इत्यत्र पूर्वविप्रतिषेधेन ण्यः । कथं तर्हि दैतेय इति । असाधुरेवायमित्येके । वृत्तिकारस्तु दितेः कृदिकारादिति ङीषि कृते लिङ्गविशिष्टपरिभाषाया अनित्यत्वाण्याभावे स्त्रीभ्यो ढगित्याहुः । वानस्पत्यम् । अत्राचित्तहस्तिधेनोरिति ठकं बाधित्वा रायः । अर्थविशेषलक्षणात् किम् । तस्येदमित्यर्थसामान्यलक्षणः पर एव यथा स्यात् । औष्ट्रपतम् । उष्ट्रपतिर्नाम पत्रम् । तस्येदम् । पत्राध्वर्युपरिषदश्चेत्यञ् ।

## उत्सादिभ्योऽञ् ॥ ८६ ॥

अणस्तदपवादानामिञादीनां चापवादः । औत्सः । औदपानः । वष्कयासे । असे । असमासे । पूर्वाचार्यसंज्ञेयम् । बष्कयस्यापत्यं वाष्कयः । असे किम् । गौवष्कयिः । अस इत्येतदेवेह तदन्तविधिं ज्ञापयति । धेनुशब्दोऽत्र पठ्यते । अधेनूनां समूहः आधेनवमिति सिध्यति । उदस्थानो देशे । औदस्थानः । देशे किम् । यदृच्छया कश्चिदुदस्थानः तस्यापत्यं औदस्थनिः । पृषदंशे । पार्षतोंऽशः । अन्यत्र त्वणेव । ग्रीष्मादछन्दसीति वक्तव्यम् । इह मा भूत् । त्रैष्टुभ् ग्रैष्मी । छन्दश्चेह वृत्तं न तु वेदः । स्यादेतत् । अछन्दसीति मास्तु । ग्रीष्मे भवेत्यादिशेषार्थविवक्षायां ऋत्वणाऽञो बाधात् । न ह्यत्र पूर्वविप्रतिषेधः । अर्थविशेपलक्षणापवादापेक्षयैव ण्यादीनां तदभ्युपगमात् । ऋत्वण् तु नार्थविशेषलक्षणः । शेषमात्रे विधानात् । किञ्च । कक्ष्या-

न्तरप्राप्तोऽयम् । तथाहि । अणोऽपवादः कालाट्ठञ् तस्यापि ऋत्वण् । इति । सत्यं ग्रीष्मो देवता अस्या इत्यशैषिकार्थविवक्षायामौत्सर्गिकोऽणेव यथा स्यादित्येतदर्थमिदम् ।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमेण नञ्स्नञौ स्तः । स्त्रीषु भवं स्त्रैणम् । स्त्रीणां सङ्घः स्त्रैणः । स्त्रीभ्य आगतस्ताभ्यो हितो वा स्त्रैणः । एवं पौंस्नः । अयं योगो वत्यर्थे न प्रवर्त्तते । स्त्रीपुंवच्चेति ज्ञापकात् । स्त्रीवत् । पुंवत् । कथं तर्हि त्वतल्भ्यां समावेशः । स्त्रीत्वम् । स्त्रीता । पुंस्त्वम् । पुंस्तेति । आ च त्वादिति चकारादिति वक्ष्यते । स्यादेतत् । उभाभ्यां नञेवास्तु । पौंस्नमित्यत्र संयोगान्तलोपे सति सकारो न श्रूयेतेति चेत्तर्हि प्रकृतोऽत्रास्तु । स्त्रीपुंसयोर्नुक् चेति सूत्र्यताम् । न चैवं स्त्रैणाः पौंस्ना इत्यत्र यञञोश्चेति लुक्प्रसङ्गः । सङ्घाङ्कलक्षणेष्वण्प्रसङ्गश्च स्यादिति वाच्यम् । उभयत्रापि गोत्र इत्यनुवृत्तेः । ऋषिप्रजनस्य तत्र गोत्रशब्देन ग्रहणात् । अत एव हि सिद्धान्ते पौत्रा दौहित्रा नानान्द्रा इत्यत्र न लुक् । अत्राहुः । नकि टिलोपः स्यात् । न चैवं नुगानर्थक्यं यं विधिं प्रतीति न्यायात् टिलोपप्रवृत्त्यैव नुकः सार्थक्यात् । पुंशब्दे हि नुकं विना टिलोपो न प्राप्नोतीति स्पष्टमेव । स्त्रीशब्देऽपि श्रीर्देवतास्य श्रायं हविरित्यत्रेव यस्येतिलोपात् परत्वाद् वृद्धिः स्यात् । तस्माद्यथान्यासमेवास्त्विति । अत्रेदं वक्तव्यम् । स्त्रीपुंसयोर्नक् चेत्यस्तु आगमे अकारोऽपि विवक्षितः । तस्य च यस्येतिलोपे कृतेऽपि स्थानिवत्वाट्टिलोपो न भविष्यतीति । एवञ्च टिड्ढाणञिति सूत्रेणैव ङीप्सिद्धौ नञ्स्नञोरुपसंख्यानमपि

मास्त्विवति महदेव लाघवम् । तस्मादिह नञ्स्नञाविति गौरवं किमर्थं स्वीकृतमिति चिन्त्यम् ।

द्विगोर्लुगनपत्ये ॥ ८८ ॥

द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । द्विगोरिति षष्ठी । हेतुत्वञ्च षष्ठ्यर्थः । तच्च भाविनोऽपि बुध्याध्यवसायात् । रथन्तरसामतादेर्यथा । द्विगुनिमित्तभूतस्येति किम् । पञ्चकपालस्येदं पाञ्चकपालम् । अजादिः किम् । पञ्चगर्गरूप्यम् । पञ्चगर्गमयम् । इदं चोत्तरसूत्रादचीत्यपकृष्य व्याख्यानाल्लभ्यते । वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणाद्वा । स्यादेतत् । त्रैविद्यः । पाञ्चनदः । षाट्कुल इत्यत्रातिप्रसङ्गः । न च समाहारद्विगोरण् इति वाच्यम् । पञ्चकपालीशब्दादप्यण्प्रसङ्गात् । तथाच द्विगोर्लुकि तन्निमित्तग्रहणम् । अर्थविशेषासम्प्रत्ययेऽतन्निमित्तादपीति वार्त्तिकं तद्धितार्थद्विगुना सह फलितार्थैक्ये समाहारद्विगोः परस्यापि लुगिति व्याख्याय प्रत्याचक्षाणेन भाष्यकृताविरविकन्याय आश्रितः । उच्यते । व्यवयवा त्रिविधा वा विद्येति मध्यमपदलोपी समासः । तत्प्रत्याख्यानपक्षेऽपि विशेषणं विशेष्येणेति कर्मधारयः । दिक्संख्ये संज्ञायामिति नियमस्य तु नायं विषयः । मुख्ये कार्यसम्प्रत्ययात् । इदं तु संख्याशब्दस्य गौणत्वात् । एतेन त्रिलोकनाथेन सतां मखद्विष इत्यादि व्याख्यातम् । यद्वा अव्यविकन्यायस्येह सङ्कोचोऽस्तु । न हि समाहारद्विगोः सर्वत्र तद्धितानभिधाने नियामकमस्ति । किञ्च भाष्योक्तमध्यमपदलोपेनापि पाञ्चकपाल इति प्रयोगे भासे-

ऽनभिधानमेव शरणम् । इष्टापत्तौ तु किं समाहारे निषेधेन । पाञ्चनदे तु समाहारे नदीभिश्चेत्यव्ययीभावात्तद्धित इति सर्वं सुस्थम् । षण्णां कुलमिति षष्ठीतत्पुरुषे ततस्तद्धित इति दिक् । अनपत्ये किम् । द्वयोर्देवदत्तयोरपत्यं द्वैदेवदत्तिः ॥

गोत्रेऽलुगचि ॥ ८९ ॥

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात् । गर्गाणां छात्रा गार्गीयाः । वृद्धाच्छः । गोत्रे किम् । यस्कादिभ्यो गोत्र इति प्रकरणेन येषां लुक् प्राप्तस्तेषामेवालुग्यथा स्यात् । नेह कुवलस्येदं कौवलम् । वादरम् । अचि किम् । गर्गेभ्य आगतं गर्गरूप्यम् । गर्गमयम् । प्राग्दीव्यत इत्येव । गर्गेभ्य हितं गर्गीयम् । इह बिदानामपत्यं बैदः । बैदस्य बैदयोर्वापत्यानि बिदाः । युवबहुत्वाबहुत्वाभ्यामेव लुगलुकौ न तु गोत्रबहुत्वाबहुत्वाभ्याम् । यथा चेदं सिध्यति तथा रायक्षत्रियार्षेतिसूत्रे एवोपपादितम् ॥

यूनि लुक् ॥ ९० ॥

प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात् । इह गोत्रे लुगित्यतः प्रागेव यून्यचीत्युक्त्वा द्विगोर्लुगनपत्ये । अचि यूनीति बोध्या गोत्रे नेत्येव सूत्र्यताम् । तथा च लुगलुग्ग्रहणं शक्यं प्रत्याख्यातुम् । सूत्रस्योदाहरणं तु । ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः । फिन् । ततो यून्यण् । ग्लौचुकायनिः । तस्य छात्रो ग्लौचुकायनः । अणो लुकि कृते वृद्धत्वाभावाच्छो न । अचीत्येव । ग्लौचुकायनरूप्यम् । प्राग्दीव्यत इत्येव । तस्मै हितम् । ग्लौचुकायनीयम् ।

## फक्फिञोरन्यतरस्याम् ॥ ९१ ॥

यूनीत्येव । पूर्वेण नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम् । गार्ग्यायणस्य छात्राः गार्गीयाः । गार्ग्यायणीयाः । यस्कस्यापत्यं शिवादिभ्योऽण् । यास्कः । तस्यापत्यं युवाऽणो द्व्यच इति फिञ् । यास्कायनिः । तस्य छात्रा यास्कीयाः । यास्कायनीयाः ।

## तस्यापत्यम् ॥ ९२ ॥

तस्येति षष्ठ्यन्तात् समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया स्युः । लिङ्गवचनेऽतन्त्रे । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । स्त्रैणः । पौंस्नः । यद्यपि तस्येदमित्येवापत्येऽप्यण् सिद्धस्तथापि अत इञ् इत्याद्यर्थं तस्यापत्यमिति तावद्वक्तव्यम् । योगविभागस्तु भानोरपत्यं भानव इत्यत्र वृद्धाच्छं बाधितुम् । तथाहि असति योगविभागे प्रकृतिविशेषसम्बद्धस्यैवापत्यार्थस्योपयोगात्ततोऽन्योऽपत्यार्थः शेष एव स्यात् तथा च वृद्धाच्छः प्रसज्येत । योगविभागे तु कृते अपत्यार्थस्योपयोगाच्छेषत्वाभावेन छस्य प्राप्तिरेव नास्तीति ।

## एको गोत्रे ॥ ९३ ॥

गोत्रापत्ये प्रथम एव शब्दः प्रत्ययं लभते । उपगोर्गोत्रापत्यमौपगवः । इह पक्षद्वयम् । अपत्यशब्दो जन्यपरः । तेनोत्पादयितैवापत्येन युज्यते । तथा च लोके कस्येदमपत्यमिति पितामहं प्रति पृष्टे चैत्रस्य मैत्रस्य वेत्युत्तरयति नतु ममेति । अमरोऽप्याह । आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे इति । मुख्यमतं तु प्रयोज्यपरोऽपत्यशब्दः न पतन्त्यनेना-

पत्यमिति व्युत्पत्तिः पङ्क्तिविंशतीतिसूत्रे भाष्ये दर्शितत्वात् व्यवहितोऽपि हि पितामहादीनामुद्धर्तेति प्रसिद्धमितिहासेषु जरत्कार्वाद्युपाख्याने । सूत्रकारोऽप्याह । अपत्यं पौत्रप्रभृतीति । आद्यपक्षे हि अपत्यमिवापत्यमिति गौणी वृत्तिराश्रयणीया स्यात् । तत्राद्ये पक्षे यद्येतन्नारभ्येत तदा तत्र तत्रापत्ये तत्तत्पितृवाचकात् प्रत्ययः स्यात् । तथाहि । उपगोरौपगवः । तस्यौपगविः । तस्यौपगवायनः । एवं शततमे ऽपत्ये एकोनशतं प्रत्यया इत्यनिष्टं स्यात् इष्टं च न सिध्येत् औपगव इति । तृतीयादेरुपगुं प्रत्यनपत्यत्वात् । द्वितीये तु पक्षे उपगोः पञ्चमः पूर्वेषां चतुर्णामपत्यं तत्र यदोपगोः प्रत्ययस्तदौपगव इतीष्टं यद्यपि सिध्यति तथाप्यनिष्टमपि प्राप्नोति । तद्यथा । औपगवादौपगविः तत औपगवायनः । तत औपगवायनिरिति पञ्चमे त्रीण्यनिष्टानि षष्ठे चत्वारि । एवं यावतिथमपत्यमभिधित्सितं तावन्ति द्व्यूनान्यनिष्टानि प्राप्नुवन्ति । यथा शततमे अष्टौ नवतिश्चेति । एवं स्थिते इदं प्रारभ्यते । अत्रायं सङ्ग्रहः ।

अपत्यं पितुरेव स्यात्ततः प्राचामपीति वा ॥
आद्ये पक्षे तृतीये द्वौ चतुर्थे त्रय इत्यपि ।
एकोनाः प्रत्ययाः प्राप्ता गोत्रं यावतिथं ततः ॥
द्व्यूनेभ्यस्तु द्वितीये स्युरनिष्टाः प्रत्ययास्ततः ।
आरब्धो नियमो गोत्रे यून्यथैवं समीक्ष्यताम् ॥

स्यादेतत् । द्वितीयपक्षेऽस्तु नाम नियमः । एकशब्दस्यानेकार्थतया एक एव प्रथमः साधारण एव वा ननु द्वितीयादिरित्यर्थात् । उत्पादयितैवापत्येन युज्यते इत्येवंरूपे प्रथमपक्षे तु अप्राप्तविध्यर्थतया द्वितीयादेरपि प्रत्ययो दुर्वारः । सत्यम् । गोत्रे

बोधनीये क्रमेणानेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्यादिति तस्मिन् पक्षे व्याख्येयम् । अपत्यग्रहणानुवृत्तेः । अस्मिन् पक्षे सामर्थ्यात् परम्परासम्बन्धाश्रयेण प्रत्यय इति सर्वं सुस्थम् । औपगवः । गार्ग्यः । नाडायनः ।

गोत्राद्यून्यस्त्रियाम् ॥ ९६ ॥

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यान्न तु मूलप्रकृत्यनन्तरयुवभ्यः । गार्ग्यायणः । अस्त्रियामिति योगो विभज्यते । यूनीतिशब्दाधिकारात् स्वरूपपरम् । परिभाषेयम् । यत्र युवशब्दः श्रूयते तत्रास्त्रियामित्युपतिष्ठत इत्यर्थः । जीवति तु वंश्ये युवा अस्त्रियामिति फलितार्थः । तेन स्त्रियां गोत्रत्वादेक एव प्रत्ययः । दाक्षी ॥

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमान्हिकम् ॥

अत इञ् ॥ ९७ ॥

अपत्येऽर्थे । दाक्षिः । अतः किम् । शुभंयाः । तस्यापत्यं शौभंय्यः । कथं तर्हि प्रदीयतां दाशरथाय मैथिली । शैषिकोऽण् भविष्यति । अपत्यत्वरूपविशेषस्याविवक्षितत्वात् । ओ विष्णुः । तस्यापत्यमिः । व्यपदेशिवद्भावादत इञ् । यूनि तु यञिञोश्चेति फक् । यस्येतिलोपं बाधित्वा परत्वादादिवृद्धिः । आयनः ।

बाह्वादिभ्यश्च ॥ ९८ ॥

एभ्य इञ्स्यादपत्ये । इह प्रायेणानकारान्तास्तेभ्योऽण् प्राप्तः । अजीगर्तादिषूदङ्कपर्यन्तेष्वदन्तत्वात् प्राप्तमिञं बाधित्वा ऋष्यन्धकेत्यण् प्राप्तः । चूडाशब्दाद्द्व्यचः इति ढक् प्राप्तः । वृषलादिभ्यस्तन्नामिकाण् प्राप्तः । बाहविरित्यादि ।

आकृतिगणोऽयम् । इह शिरस्लोमन्शब्दौ पठ्येते । ताभ्यां साम-र्थ्यात्तदन्तग्रहणम् । अचि शीर्षः । हास्तिशीर्षिः । उडूनीव शरा इव च लोमानि यस्य तस्यापत्यमौडुलोमिः । शारलोमिः । बहुत्वे तु इञोऽपवादोऽकारः । उडुलोमाः । शरलोमाः । बाह्वादिषु याः पुराणादिप्रसिद्धाः संज्ञास्ताभ्य एव प्रत्ययो बोध्यः । प्रसिद्धतर-त्वेन प्रथमोपस्थिताभिस्ताभिरेव विधेर्निराकाङ्क्षत्वात् । यस्तु इदानींतनो बाहुस्तदपत्यं तु बाहव इत्येव । उक्तं च हरिणा । अभिव्यक्तपदार्था इत्यादि । अनर्थकं संदिग्धार्थकम् अप्रयुक्तं च क्रमेण विशेषणव्यावर्त्यम् । तदुक्तिषु तत्सदृशेष्वित्यर्थः । यत्तु बाधृ लोडने इति धातौ माधवेनोक्तं केवलस्य बाहोरपत्येनायो-गात् सामर्थ्यात्तदन्तविधिः सौबाहविरिति । तच्चिन्त्यम् । जानन्ति बाहवीत्याश्वलायनसूत्रात् प्रकृतसूत्रे एव बाहविरिति भाष्यवृत्त्याद्युदाहरणाच्च बाहोः संज्ञात्वेन निर्णयात् ॥

सुधातुरकङ् च ॥ ९९ ॥

चादिञ् । सुधातुरपत्यं सौधातकिः । व्यासवरुडनिषा-दचण्डालबिम्बानां चेति वक्तव्यम् । वैयासकिः । वरुडादयो जा-तिविशेषाः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ॥

गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ १०० ॥

कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । ब्राध्नायनाः । शाङ्खायनाः । कुञ्ज-ब्रध्नशब्देभ्यः फञि तदन्ताद्व्रातच्फञोरिति स्वार्थे ञ्यः तस्य तद्राजत्वाद्बहुषु लुकि अन्तोदात्तार्थं चित्करणम् । तर्हि फगे-वास्त्विति चेत् एवं हि व्रातफञोरिति वक्तव्यम् । तथा च नाडायनादिभ्योऽपि ञ्यः स्यात् । ननु च्फञाश्रित्वं ञ्य-

विधौ विशेषकतया चरितार्थम् । अन्यथा अश्वादिभ्यः फञ् । आश्वायनः । अत्रापि ञ्यः स्यात् । ञित्वं तु वृद्ध्या चरितार्थम् । विशेषणमात्रे उद्देश्येऽनुबन्धान्तरमेवासजेदिति तु ञकारेऽपि तुल्यम् । वृद्धिमात्रे ह्युद्देशे ककारमेवासजेत । एवं च चकारञकारयोस्तुल्यबलत्वेऽपि परत्वाञ्ञित्स्वरेणाद्युदात्तः प्राप्नोति । अत्र भाष्यम् । स्वरे योगविभागः क्रियते । चितः । अन्त उदात्तः स्यात् । तद्धितस्य । चितस्तद्धितस्य प्राग्वत् । परमपि ञित्स्वरं बाधितुमिदम् । कौञ्जायनाः । ततः कितः । कितस्तद्धितस्यान्त उदात्तः स्यादिति । यदि तु च्फञ्प्रत्ययः क्रियते तदा शक्यो योगविभागोऽकर्तुम् ।

स्यादेतत् । गोत्रे कुञ्जादिभ्यश्च्फञ् । बहुषु फगिति पठित्वा ततो नडादिभ्य इति क्रियताम् । मैवम् । गोत्रबहुत्वे यूनश्चाबहुत्वे कौञ्जायन्यः कौञ्जायन्यावित्यत्र यकारदौर्लभ्यापत्तेः । वैपरीत्ये कौञ्जायना इत्यत्र यकारापत्तेश्च । सिद्धान्ते तु यूनीञो रायक्षत्रियेति लुकि ञ्यस्य बह्वर्थोपसंक्रमे लुक् । अन्यथा तु गोत्रेऽलुगचीत्यलुगिति सर्वं सुस्थम् । वार्तिककारस्त्वाह । अपत्यं वा गोत्रम् । मूलप्रकृतेश्चापत्यः । आपत्याज्जीवद्वंशात्स्वार्थे द्वितीयो युवसंज्ञः । स चास्त्रियाम् । एकोगोत्रग्रहणानर्थक्यश्च बहुवचनलोपिषु च सिद्धमिति । अपत्यस्येदमापत्यं पौत्रप्रभृत्यपत्यं तद् गोत्रसंज्ञम् । आपत्यः प्रत्ययो गर्गादेरेव नानन्तरगोत्रयुवभ्यः । पौत्रादेरपत्ये चतुर्थादौ जीवद्वंश्ये प्रतिपाद्ये मूलप्रकृतेरेव गर्गाद् द्वौ प्रत्ययौ । तत्र द्वितीयः स्वार्थिक इत्यर्थः । एवं च सूत्रमते गार्ग्यायण इत्यत्र गर्गो गार्ग्ये विशेषणं चतुर्थे तु तृतीयः । वार्तिकमते तु गर्ग एव चतुर्थविशेषणम् । आन्तरालिकौ तु संसर्गघटकाविति विवेकः । ए-

तस्मिन् पक्षे स्फकं कृत्वा बहुषु तदपवादः फगपि सुकरः । युवबहुत्वे यून्येव प्रत्ययद्वयोत्पादेन यकारश्रवणापत्तेरभावात् । अबहुत्वे च फकोऽनुत्पत्या यकारसिद्धेः ।

नडादिभ्यः फक् ॥ १०१ ॥

गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो नाडिः । नड । चर । वक । मुञ्ज । इतिक । इतिश । उपक । लमक । शलङ्कु शलकश्च । शलङ्कोर्गोत्रापत्यं शालङ्कायनः । पैलादिषु शालङ्किशब्दः पठ्यते शालङ्किः पिता पुत्रश्चेति यथा स्यात् । तत्र पैलादिपाठसामर्थ्याच्छलङ्कादेशः । इञ्च । बाह्वादेराकृतिगणत्वाद्वा । एवं फगिञोर्गोत्रे विकल्पः स चैच्छिकः । वृत्तिकारास्तु कौशिकगोत्र एव फक् अन्यत्रेञिति व्यवस्थेष्यत इत्याहुः । अग्निशर्मन्वृषगणे । आग्निशर्मायणो वार्षगण्यश्चेत् । आग्निशर्मोऽन्यः । कृष्णरणौ ब्राह्मणवासिष्ठौ । कार्ष्णायनो ब्राह्मणश्चेत् । कार्ष्णिरन्यः । राणायनो वासिष्ठश्चेत् । राणिरन्यः । क्रोष्टु क्रोष्टश्च । क्रौष्टायनः । अमुष्येति पठ्यते निपातनादलुक् । आमुष्यायणः । लिगु । अश्वल । द्वीप । शकट । मिमत । उदुम्बर । इत्यादि ॥

हरितादिभ्योऽञः ॥ १०२ ॥

अञन्तेभ्य एभ्योऽपत्ये फगिति वृत्तिकाराः । वस्तुतो व्यधिकरणे पञ्चम्यौ । हरितादिभ्यो विहितः परो वा यो गोत्रेऽञ् तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तात् फक् स्यात् । स चार्थाद्यून्येव । गोत्रेऽपत्यप्रत्ययद्वयायोगात् । अत एवोत्तरार्थमनुवृत्तस्यापि गोत्रग्रहणस्येहाञा सम्बन्धो नतु फकेति तत्त्वम् । इञोऽपवादोऽयम् । हरितादिर्बिदाद्यन्तर्गणः । हारितायनः ॥

यञिञोश्च ॥ १०३ ॥

गोत्रे यौ यञिञौ तदन्ताद्यूनि फक् स्यात् । गार्ग्यायणः । दाक्षायणः । गोत्रे किम् । द्वीपादनुसमुद्रं यञ् । द्वैप्यः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । तदपत्ये मा भूत् ।

शरद्वच्छुनकदर्भाद्‌ भृगुवत्साग्रायणेषु ॥ १०४ ॥

एभ्यो गोत्रे फक् स्यात् यथासंख्यमेषु । शरद्वदादीनां भृग्वादिवंशप्रभवा दत्रिमा अपि पुत्राः सन्ति स्ववंशप्रभवा अपि । अतो विशेषणम् । तत्र भृगुः शरद्वतोऽपत्यं न भवति । पूर्वभावित्वात् । एवं शुनकस्य वत्सः । तस्माद् भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे आत्रिभृग्विति यञञोरिति च लुक् । लोप्यलोपिनां द्वन्द्वे हि वैकल्पिकोऽयम् । अत एव निर्देशादगार्ग्येत्यादेश्चेत्युक्तम् । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः । शरद्वच्छुनकौ विदादी । ताभ्यामअपवादः फक् ।

द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०५ ॥

एभ्यो गोत्रे फग्वा स्यादिञोऽपवादः । द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । कथं तर्ह्यश्वत्थामा द्रौणायनिरिति । अनन्तरे ह्ययम् । सत्यम् । आरोपाद् भविष्यति ।

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ १०६ ॥

एभ्योऽञ् स्याद् गोत्रे ये त्वत्रानृषयस्तेभ्य आनन्तर्ये । अनृषीति पञ्चम्याः सौत्रो लुक् । आनन्तर्ये इति स्वार्थे ष्यञ् ।

विदस्य गोत्रं बैदः । अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं पौत्रः । विद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमन्यु । विश्वानर । ऋष्टिषेण । ऋतभाग । हर्यश्व । प्रियक । आपस्तम्ब । शरद्वत् । शुनक । धेनु । गोपवन । इरित । गविष्ठिर । निषाद । मठर । पृदाकु । पुनर्भु । पुत्र । दुहितृ । ननान्दृ । परस्त्री परशुश्च । आपद्यते इति शेषः । परस्त्रिया अपत्यं पारशवः । ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः सा च जात्यन्तरयोगात् परस्त्री । यस्तु परभार्यायामुत्पन्नः स पारस्त्रैणेयः । कल्याण्यादिरनुशतिकादिश्च । न चैवं पारशवेऽपि स्थानिवद्भावादनुशतिकादिकार्यं स्यादिति वाच्यम् । पूर्वोत्तरपदसम्प्रमोहात् । नहीह एतावान् पूर्वपदस्यादेश इति विभागोऽवगम्यते ।

## गर्गादिभ्यो यञ् ॥ १०७ ॥

गोत्र इत्येव । गार्ग्यः । मनुतन्तुशब्दोऽत्र पठ्यते । समुदाय एका प्रकृतिः । न तु प्रकृतिद्वयम् । तथा च बह्वृचब्राह्मणम् । मानुतन्तव्यमुवाचेति । केचित्तु प्रकृतिद्वयं मन्यन्ते । कथं तर्हि मानवी प्रजेति । लोहितादिपाठाद्धि नित्येन ष्फेण भाव्यम् । सत्यम् । अपत्यसामान्येऽण् भविष्यति । अथ कथं रामो जामदग्न्यः अर्जुनः कार्तवीर्यः व्यासः पाराशर्यः अनन्तरा ह्येते सत्यम् । अनन्तरेऽपि गोत्रत्वारोपो बोध्यः । जामदग्न्या वात्सा इति प्रवराध्यायप्रयोगस्तु गोत्रस्याप्यनन्तरापत्यत्वविवक्षायामृष्यणि द्रष्टव्यः । गर्ग । वत्स । वाजासे । वाजशब्दो यञमुत्पादयति असेऽसमासे । समासे तु सौवाजिः । ग्रहणवतेत्यस्यानित्यत्वं ज्ञापयितुमसे इति । तेनानुपसर्जनादित्यस्य

प्रत्याख्यानपक्षेऽपि तदन्तविधिर्लभ्यते । संकृति । अज । व्याघ्रपात् । विदभृत् । प्राचीनयोग । पुलस्ति । चमसि । रेभ । अग्निवेश । शङ्ख । शठ । धूम । अवट । चमस । धनञ्जय । वृक्ष । विश्वावसु । जरमाण । लोहित । संशित । बभ्रु । मण्डु । जिगीषु । मनुतन्तु । तण्ड । वतण्ड । कपिकत । कुरुकत । अनडुह । शकल । कण्व । गोकक्ष्य । अगस्त्य । कुण्डिनी । यज्ञवल्क । अभयजात । विरोहित । वृषगण । रहूगण । शण्डिल । मुद्गल । मुसल । पराशर । जातूकर्ण । मन्त्रित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूर । आरक । पिङ्गल । उलूक । देवहू । एकलु । बृहदग्नि । जमदग्नीत्यादि ।

मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥ १०८ ॥

गोत्रे यञ् स्यात् । माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिकश्चेत् । बाभ्रवोऽन्यः । बभ्रोर्गर्गादित्वात्सिद्धे कौशिक एवेति नियमार्थं वचनम् । गर्गादिपाठस्तु लोहितादिकार्यार्थः । बाभ्रव्यायणी । गण एव बभ्रुः कौशिक इति तु लाघवार्थं वक्तुं युक्तम् ।

कपिबोधादाङ्गिरसे ॥ १०९ ॥

काप्यः । बौध्यः । आङ्गिरसे किम् । कापेयः । इतश्चानिञ इति ढक् । बौधिः । अनृषित्वादिञ् । बाह्वादित्वाद्वा । कपेर्गर्गादित्वात् प्राप्ते आङ्गिरस एवेति नियमार्थं सूत्रम् । गणपाठस्तु लोहितादिकार्यार्थः । काप्यायनी ।

वतण्डाच्च ॥ ११० ॥

आङ्गिरस इत्येव । वातण्ड्यः । अस्य शिवादौ गर्गादौ च

च पाठाद्यञणौ प्राप्तौ तत्र यञेवेति नियम्यते । अनाङ्गिरसे तु द्वावपि स्तः । वातण्डः । वातण्ड्यः ।

लुक् स्त्रियाम् ॥ १११ ॥

वतण्डाद्यञो लुक् स्यात् स्त्रियामाङ्गिरसे गोत्रे । शार्ङ्गरवादिषु पाठान्ङीन् । वतण्डी । अनाङ्गिरसे किम् । वातण्ड्यायनी । लोहितादित्वात् ष्फः । शिवाद्यणि तु वातण्डी । ऋषित्वात्ष्यङ् न ।

अश्वादिभ्यः फञ् ॥ ११२ ॥

अश्वादिभ्यः फञ् स्याद्गोत्रे । आङ्गिरसे इति निवृत्तम् । आश्वायनः । अश्व । अश्मन् श्यामेत्यादि । इह गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते । बैल्य । आनडुह्य । आत्रेय इति बलिर्नाम राजर्षिः । ततो वृद्धेत्कोसलेति ञ्यङ् । आनडुह्यशब्दो गर्गादियञन्तः । आत्रेयशब्दो ढगन्तः । ततः सामर्थ्याद्यूनि फञ् । नहि युवानं विनापत्यप्रत्ययद्वयं लब्धुं शक्यते । शप आत्रेये । शापायनः । आत्रेयादन्यस्तु शापिः । अनृषित्वादण् न । बाह्वादित्वाद्वा । अन्ये त्वणं प्रत्युदाहरन्ति । पुंसि जाते । पुंसीति प्रकृतिविशेषणम् । जातस्यापत्यं जातायनः । पुंसीति किम् । जाताया अपत्यं जातेयः । लिङ्गविशिष्टपरिभाषया प्राप्तः फञ् न भवति । आत्रेयभारद्वाजे । आत्रेयायणो भारद्वाजश्चेत् । अन्यत्रात इञो ण्यक्षत्रियेति लुक् । भरद्वाजात्रिये । आत्रिगोत्रजो यदा भरद्वाजगोत्रजेन स्वीक्रियते तदा फक् । भारद्वाजायनः । अन्यस्तु भारद्वाजः । विदाद्यञ् ।

भर्गात्त्रैगर्ते ॥ ११३ ॥

भार्गायणः । त्रैगर्तश्चेत् । भार्गिरन्यः ।

शिवादिभ्योऽण् ॥ ११४ ॥

गोत्र इति निवृत्तम् । इतः प्रभृत्यपत्यसामान्ये प्रत्यय इति वृत्तिकारः कैयटादयश्च । यूनि लुक्सूत्रे तु राजन्याद् वुञ् मनुष्याच्च ज्ञापकं लौकिकं परमिति भाष्यस्य तत्रत्यकैयटस्य च पर्यालोचनया गोत्रसंज्ञासूत्रपर्यन्तमयं गोत्राधिकार इति लभ्यते । तदिह ग्रन्थानां विरोधे उद्धारोऽन्वेषणीयः सूरिभिः। शिवादिभ्योऽण् स्यात् । प्रायेणेमेऽदन्ताः । तेभ्योऽत इञ् प्राप्तः । तक्षन्शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम् । ण्यस्य बाधा तु नेष्यत इति वृत्तिः । अत्रोपपत्तिमुदीचामिति सूत्रे वृत्तिकार एवाह । इञित्युक्ते वचनसामर्थ्याण्येञौ सिद्धौ उदीचां ग्रहणन्तु वैचित्र्यार्थम् । शिवाद्यणायमिञेव बाध्यतां न तु ण्योऽपीति । ताक्ष्णः । ताक्षण्यः । वार्त्तिककारस्तु उदीचामिञ्सूत्रे तक्ष्णोण्वचनं कृतवान् सर्वथा ण्याणभ्यां रूपद्वयं निर्विवादम् । यत्तु षपूर्वहन्धृतराज्ञामणीति सूत्रे हरदत्तेनोक्तम् । ताक्ष्णः । तस्येदमित्यण् ! नत्वपत्ये कारिलक्षणेन ण्ये बाधितत्वादिति तदिहत्यभाष्यवृत्तिस्वग्रन्थविस्मरणमूलकम् । गङ्गाशब्दः पठ्यते।गाङ्गः। पक्षे तिकादित्वात्फिञ् । शुभ्रादित्वाड्ढक् च । गाङ्गायनिः । गाङ्गेयः । विपाट्शब्दः पठ्यते । कुञ्जादिलक्षणेन च्फञा समावेशार्थम् । वैपाशः । वैपाशायन्यः । जरत्कारुशब्दः पठ्यते । तत्र शुभ्रादिढका समावेशाद्वैरूप्यं जारत्कारवः । जारत्कारेयः । विश्रवणरवणशब्दौ पठ्येते । विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरमेव वा वृत्तिविषये तत्समानार्थे । वैश्रवणः । रावणः । द्व्यचो नद्याः । नदीवाचिनो ये द्व्यचूकाः कुल्याप्रभृतयस्तेभ्यस्तन्नामिकाणं बाधित्वा द्व्यच इति ढकि प्राप्तेऽण् भवतीत्यर्थः । त्रिवेणी त्रिवेणं च ।

त्रिवेण्या अपत्यं त्रैवेणः । तन्नामिकाणि सिद्धे आदेशार्थं वचनम् । भूमिप्रभृतिभ्य इतश्चानिञ इति ढक् प्राप्तः । इलाप्रभृतिभ्यो स्त्रीभ्यो ढक् प्राप्त इति दिक् । स्यादेतत् । अण्ग्रहणं माऽस्तु । वचनसामर्थ्यादिञादिभिर्बाधितुमारब्धो ऽणेत्र प्रसोष्यते । मैवम् । ऋषिषेणशब्दोऽत्र पठ्यते । तस्मादत इञ् प्राप्तः । स एव सेनान्तलक्षणेन ण्येन परत्वाद्बाधितुमारब्धोऽनेन सूत्रेण प्रतिप्रसूयेत । तस्माद्यथान्यासमेवास्तु ।

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११५ ॥

अवृद्धशब्दोपास्थितास्तन्नामिकाश्च या नदीमानुष्यस्ताभ्यो ऽण् स्यात् । अवृद्धेभ्यो नदीमानुषीनामभ्य इति फलितोर्थः । ढकोऽपवादः । यमुनाया अपत्यं यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः । अवृद्धाभ्यः किम् । वासवदत्तेयः । नदीत्यादि किम् । वैनतेयः । तन्नामिकाभ्यः किम् । शोभनाया अपत्यं शौभनेयः ।

ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११६ ॥

एभ्योऽण् स्यात् । ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः । श्वाफल्कः । वृष्णिभ्यः । वासुदेवः । आनिरुद्धः । शौरिः । श्रीपातिरिति तु बाह्वादित्वात् । कुरुभ्यः । नाकुलः । साहदेवः । इञ एवायमपवादः । मध्येऽपवादन्यायात् । अत्रिशब्दात् परत्वाड्ढक् । आत्रेयः । ण्योऽपि परत्वाद्बाधक एवेति वक्ष्यते ।

मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ११७ ॥

संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण्प्रत्ययश्च ।

उत्सर्गसिद्धमणमनूद्य तत्सन्नियोगेनादेशमात्रं विधीयते । पूर्वस्येति वाच्ये स्त्रीलिङ्गनिर्देशोऽर्थगतं स्त्रीत्वमारोप्य । आरोप्यफलं तु जननीवाचिन एव ग्रहणं यथा स्यादित्याहुः । अभिव्यक्तपदार्था इत्यनेन सिद्धस्यापि स्पष्टीकरणं फलमिति भावः । द्वैमातुरः । सांमातुरः । भाद्रमातुरः । संख्येत्यादि किम् । सौमात्रः । केवलात्तु न भविष्यति । अव्यभिचारेणापत्यं प्रत्यविशेषकत्वादित्याहुः । अयोनिजव्यावर्तकता वास्तु ।

कन्यायाः कनीन च ॥ ११८ ॥

ढकोऽपवादोऽण् स्यात् तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ।

विकर्णशुङ्गछगलाद्वत्सभरद्वाजात्रिषु ॥ ११९ ॥

वात्स्यादीनामपत्यप्रत्ययान्तानां द्वन्द्वः । बहुत्वस्य लोपिभिरेव कृतत्वान्नित्यं लुक् । न तु वत्सादीनामेव द्वन्द्वः । मूलप्रकृत्यर्थानां विकर्णादीन्प्रत्यपत्वाभावात् । वैकर्णः । वात्स्यश्चेत् । वैकर्णिरन्यः । शौङ्गः । भारद्वाजश्चेत् । शौङ्गिरन्यः । छागलः । आत्रेयश्चेत् । छागलिरन्यः । केचित्तु सूत्रे शुङ्गाशब्दं टाबन्तं पठन्तः शौङ्गेय इति प्रत्युदाहरन्ति । पाठद्वयमपि प्रामाणिकमिति वृत्तिकाराः ।

पीलाया वा ॥ १२० ॥

तन्नामिकाणं बाधित्वा द्व्यच इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं पैलः । पैलेयः ।

ढक् च मण्डूकात् ॥ १२१ ॥

मण्डूकाड्ढगणौ वा स्तः पक्षे इञ् । तेन त्रैरूप्यम् । माण्डूकेयः । माण्डूकः । माण्डूकिः ।

स्त्रीभ्यो ढक् ॥ १२२ ॥

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । स्त्रीशब्द इह स्वर्यते तेन स्त्र्यधिकारोऽवगम्यते । सोऽपि चातुर्थिक एव । सन्निधानान्न तु तार्तीयिकः । विप्रकर्षात् । स्त्र्यर्थग्रहणाभावान्नेह । ऐडविडः । दारदः । इडविड्शब्दाज्जनपदशब्दात्क्षात्रियाञ् । दरच्छब्दाद्व्यञ्मगधेत्यण् । तयोः स्त्रियामतश्चेति लुक् । तदन्तादपत्येऽणेव न तु ढक् । कथं ज्ञातेयं कुरु सौमित्रे भयात्त्रायस्व राघवमिति भट्टिः । बाह्वादिषु सुमित्राशब्दो बोध्यः । कथं सापत्नो भ्राता शिवाद्यण् इति दुर्घटवृत्तिः । अत्र भाष्ये । वडवाया वृषे वाच्येऽण् कुञ्चा कोकिला स्मृतः । आरक् पुंसि ततोऽन्यत्र गोधाया दृग्विधौ स्मृत इति । वृषो बीजाश्वः । तेन चार्थेन विशेषविहितेनापत्यलक्षणोर्थो ढको बाध्यते । तेनापत्ये वाडव इति भवतीति कैयटः । चतुष्पाल्लक्षणस्तु ढञ् न भवति । अचतुष्पाज्जातिवाचित्वादिति हरदत्तः । वडवा ब्राह्मणी । वडवा कुम्भदास्यश्वाः स्त्रीविशेषा द्विजन्मनामिति रभसः । अश्वे तु ढञ् भवत्येव । वाडवेयः । क्रौञ्चः कौकिलः । अपत्य एवायं ढगपवादोऽण् । कुञ्चाकोकिलादिति समाहारद्वन्द्वे नपुंसकह्रस्वः । ततोन्यत्रारक् स्यात् पुंसि । मूषिकायाः पुमान् मौषिकारः । मृग्याः पुमान्मार्गारः । गोधायाः पुमान् गौधेरः । गोधाया ढ्रक्ढगारकस्त्रयो वक्ष्यन्ते तत्र दृग्विधौ पुंसीत्येवं रूपोऽर्थः स्मृतः । अपत्यरूपोऽर्थस्तु त्रिष्वपि ।

द्व्यचः ॥ १२३ ॥

द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात् । तन्नामिकाणोऽपवादः । दात्तेयः । कथं पार्थः । तस्येदमित्यण् शिवाद्यण्वा ।

इतश्चानिञः ॥ १२४ ॥

इकारान्ताद्व्यचोऽपत्ये ढक् स्यान्न त्विञन्तात् । दौलेयः । नैधेयः । परत्वादयमृष्यणं बाधते । आत्रेयः । द्व्यचः किम् । मरीचेर्मारीच इति काशिका । तच्चिन्त्यम् । बाह्वादित्वेनेञ्प्रसङ्गात् । तथा च मिदचोन्त्यात्पर इति सूत्रे भाष्यं मरीचिशब्दो बाह्वादिषु पठ्यते इति तस्मादुदधेरौदध इत्यादि प्रत्युदाहरणान्तरं बोध्यम् । आनिञः किम् । दाक्षायणः ।

शुभ्रादिभ्यश्च ॥ १२५ ॥

एभ्यो ढक् स्यात् । शुभ्रस्यापत्यं शौभ्रेयः । इहादन्तेष्विञ् प्राप्तः । शलादिषु तन्नामिकाण् । विधवाशब्दात् क्षुद्रालक्षणो ढ्रक् । चतुष्पाद्भ्याचिषु ढञ् । गोधाशब्दाद्ढ्रक् । वचनात्तु सोऽपि भवति । क्वचिदौत्सर्गिकाण् प्राप्तः । पाण्डवेयः । उलोपस्तु न भवति । कद्रूपर्युदासेन स्त्रीलिङ्गस्यैव लोपविधौ ग्रहणादिति केचित् । एवन्तु मार्कण्डेयो न स्यात् तस्मात् पाण्डवशब्दात् पाण्डवेय बोध्यः । केचित्तु मृकण्डशब्दमदन्तं पठन्ति । मृगय्वादयश्चेतिसूत्रे उज्वलदत्तोऽप्येवम् । मृकण्डस्य मुनेस्तीर्थे तत्रास्यामथ निर्मलमिति काशीखण्डे । अस्मिन् पक्षे पर्युदासेऽपि सिद्धम् । विमातृशब्दादप्यौत्सर्गिकोऽण् प्राप्तः । वैमात्रेयः । एवं लैरवाभ्रेयः । लक्षणश्यामयोर्वासिष्ठे । लाक्षणेयः । वासिष्ठश्चेत् । लाक्षणिरन्यः । श्यामेयो वासिष्ठः । श्यामायनोऽन्यः । अश्वादित्वात्फञ् । आकृतिगणोऽयम् ।

विकर्णकुषीतकात्काश्यपे ॥ १२६ ॥

वैकर्णेयः । कौषीतकेयः । काश्यपे किम् । वैकर्णिः । कौषीतकिः ।

श्रुवो वुक् च ॥ १२७ ॥

श्रौवेयः ।

कल्याण्यादीनामिनङ् ॥ १२८ ॥

एषामिनङादेशः स्यात् ढक् च । इह स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणम् । प्रत्ययस्य सिद्धत्वात् । अन्येषां तूभयार्थम् । काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । हृद्भगसिन्ध्वन्त इत्युभयपदवृद्धिः । कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुसृष्टि । जरती । बाला । वृद्धा । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ।

कुलटाया वा ॥ १२९ ॥

पूर्वेण सिद्धो ढक् इनङ्मात्रं विकल्प्यते । कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र कुलटा । या हि व्यभिचारार्थं कुलान्यटति तस्या ग्रहणं नेष्यते । किन्तु तत्र क्षुद्राभ्यो वेति पक्षे ढ्रक् । तेन कौलटेर इति द्वितीयं रूपम् । उक्तं चामरसिंहेन अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः । कौलटेरः कौलटेयो भिक्षुकी तु सती यदि । तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मज इति । केचित्तु क्षुद्राया अपीनङा तृतीयं रूपमाहुः । वृत्तौ तु क्षुद्राभ्यः परत्वाड्ढ्रगित्युक्तम् । तच्चिन्त्यम् । तस्य वैकल्पिकतया पाक्षिकस्य ढकस्त्वयाप्यभ्युपगमाच्च । तत्र पक्षे इनङो दुर्वारत्वात् ।

चटकाया ऐरक् ॥ १३० ॥

अत्र वार्तिकम् । चटकायाः पुंलिङ्गनिर्देश इति । लिङ्गविशिष्टपरिभाषया स्त्रिया अपि भवति । चटकस्य चटकाया वा

अपत्यं चाटकैरः । स्त्रियामपत्ये लुग्वक्तव्यः । तयोरेव स्त्र्यपत्यं चटका । टाबन्तात्तद्धिते लुप्ते लुक्ताद्धितलुकीति टापो लुकि पुनरजादिलक्षणष्टाप् । स हि जातिलक्षणस्य ङीषो बाधक एव । यत्त्विह न्यासकृतोक्तम् । चटकादैरगित्येव सांप्रदायिकः सूत्रपाठ इति । तद्वार्त्तिकविरुद्धम् ।

गोधाया ढ्रक् ॥ १३१ ॥

गौधेरः । शुभ्रादित्वात् पक्षे ढक् । गौधयः ।

आरगुदीचाम् ॥ १३२ ॥

गौधारः । उदीचांग्रहणं पूजार्थम् । वचनादेव ढक्ढ्रगारकां पर्यायसिद्धेः । रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम् । जाडारः । पाण्डारः । जल घातने । डलयोरभेदाज्जडः । पडि गतौ । पण्डः । जडस्य पडस्य चापत्यमिति विग्रहः । एतच्च माधवीयधातुवृत्तौ स्पष्टम् । ह्रस्वान्तादयं प्रत्यय इति रका नास्ति सिद्धिः ।

क्षुद्राभ्यो वा ॥ १३३ ॥

अङ्गहीनाः शीलहीनाश्च क्षुद्रास्तदभिधायिभ्यो ढ्रक् वा स्यात् ढकोऽपवादः । काणेरः । काणेयः । दासेरः । दासेयः ।

पितृष्वसुश्छण् ॥ १३४ ॥

अणोऽपवादः । पैतृष्वस्रीयः ।

ढकि लोपः ॥ १३५ ॥

पितृष्वसुरन्तलोपः स्याड्ढकि । पैतृष्वसेयः । अत एव ज्ञापकाड्ढक् ।

मातृष्वसुश्च ॥ १३६ ॥

पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ।

चतुष्पाद्भ्यो ढञ् ॥ १३७ ॥

एभ्योऽपत्ये ढञ् । एभ्योऽपत्ये ढञ्स्यात् । कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाद्विशेषे । एवं शितिबाहुशब्दोऽपि । शैतिबाहयः । जम्बुः सृगालः । जाम्बेयः । जम्बूशब्दात् स्त्रीभ्यो ढक् प्राप्तः परत्वाड्ढञा बाध्यत इति ऋष्यन्धकेति सूत्रे भाष्यम् । तत्रैव तच्चिन्त्यमिति कैयटः । तस्यायं भावः । अन्दूदृन्भू इत्यादिना निपातनाज्जम्बूशब्द ऊदन्तः । न त्वसौ स्त्रीप्रत्ययान्तः । येन ढक् प्राप्नुयात् । न चाप्राणिजातेरित्यूङ् सुलभः प्राणिजातित्वात् । ऊङुत इति तु न । दीर्घान्तत्वात् । ह्रस्वान्तत्वेऽपि मनुष्यजातित्वाभावाच्चेति ।

गृष्ट्यादिभ्यश्च ॥ १३८ ॥

एभ्यो ढञ्स्यादण्ढकोरपवादः । गार्ष्टेयः । गृष्टि । हृष्टि । हलि । वलि । विश्रि । कुद्रि । अजवस्ति । मित्रयु । इहान्त्ययोर्द्वयोर्ऋषित्वादण् प्राप्तः । अन्येभ्यस्तु इतश्चानिञ इति ढक् प्राप्तः । गृष्टिः सकृत्प्रसूता गौरिति पूर्वसूत्रेणैव सिद्धमिति चेत् । अत्राहुः । कोशे गौरिति प्रायोवादः । सकृत्प्रसूता सर्वापि गृष्टिः । अतश्चतुष्पाच्छब्दत्वाभावादयमारम्भ इति । वस्तुतस्तु गृष्टिशब्दः शुभ्रादिः । तथाचान्तोदात्तं ढगन्तं प्रयुज्यते । सङ्गार्ष्टेयो वृषभो गोभिरानडिति । अतः पाक्षिकाद्युदात्तार्थमिह सूत्रे गृष्टिशब्दग्रहणम् ।

राजश्वशुराद्यत् ॥ १३९॥

यथाक्रममणिञोरपवादः । राजन्यः । श्वशुर्यः । अत्र ।

वार्तिकम् । राज्ञोऽपत्ये जातिग्रहणमिति । प्रकृतिसमुदायेन जातिश्चेद्वाच्येत्यर्थः प्रत्ययस्त्वपत्य एव । ये चाभावकर्मणोरिति प्रकृतिभावः। जातिग्रहणं किम्। वैश्याशूद्रयोरुत्पन्नो राजन एव। अनीति प्रकृतिभावः ।

क्षत्राद् घः ॥ १४० ॥

क्षत्रियः । जातावित्येव । क्षात्रिरन्यः । प्रत्ययविधौ सर्वत्र घ इति स्वरूपस्य ग्रहणं न तु तरप्तमपोः । आयन्नादिसूत्रेण घस्येयादेशविधानाज्ज्ञापकात् । न चादेशोऽपि तयोरेवेति वाच्यम् । प्रत्ययादेरिति विशेषणात् । ननु किमिदंभ्यामिति वकारस्य तौ स्ताम् । तयोश्चेयू अस्तु । मैवम् । एवं हि । किमिदंभ्यां व इयित्येव ब्रूयात् । न च घन्घचावियोऽवकाशः । तत्रापि ङमुड्वत् संज्ञाया एव सानुबन्धतापत्तेः ।

कुलात् खः ॥ १४१ ॥

कुलीनः । तदन्तविधिरिहेष्यते । उत्तरसूत्रे पूर्वपदादिति लिङ्गात् ।

अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ १४२ ॥

कुलादित्येव । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । पदग्रहणं किम् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ।

महाकुलादञ्खञौ ॥१४३॥

अन्यतरस्यामित्यनुवर्त्तते । पक्षे खः । माहाकुलः । माहाकुलीनः । महाकुलीनः ।

दुष्कुलाड्ढक् ॥ १४४ ॥

पूर्ववत्पक्षे खः । दौष्कुलेयः । दुष्कुलीनः ॥

स्वसुश्छः ॥ १४५ ॥

स्वस्रीयः ।

भ्रातुर्व्यच्च ॥ १४६ ॥

चाच्छः । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः ।

व्यन्सपत्ने ॥ १४७ ॥

सपत्नशब्दः शत्रुपर्यायः । अव्युत्पन्नप्रातिपदिकम् । यद्वा । सपत्नीशब्दादिवार्थेऽकारो निपात्यते । सपत्नीव सपत्नः । अत एव येनः सपत्ना अयते भवन्त्वित्यत्र सपत्ना इत्यवग्रहः पठ्यते । कथं तर्हि मध्योदात्ततेति चेत् इवार्थेऽलु भविष्यति । लित्स्वराच्चेष्ट-सिद्धिः । प्रकृतमनुसरामः । भ्रातुर्व्यन्स्यादपत्येऽर्थे प्रकृतिप्रत्य-यसमुदायेन शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । कथं तर्हि । पाप्म-ना भ्रातृव्येणेति । न ह्यत्रावयवार्थोऽस्तीति चेत् । अत्र भा-ष्यम् । भ्रातृव्य इव भ्रातृव्य इति । वृत्तिकारस्तु इहापत्यग्रहणं न सम्बध्यते । अनर्थकावेव प्रकृतिप्रत्ययौ । समुदायार्थः परं सपत्न इत्याह ।

रेवत्यादिभ्यष्ठक् ॥ १४८ ॥

रैवतिकः । रेवतीशब्दो ङीबन्तः । अश्वमणिद्वारोपपदात्पा-लयतेः कर्मण्यणि ङीप् । एषु चतुर्षु ढक् प्राप्तः । वञ्चु प्रलम्भ-ने । अस्माद्वृकोपपदात् कर्तर्युपमान इति णिनिः । अस्मादण् प्रा-प्तः । वृकवर्णदण्डोपपदाद् ग्रहेः कर्मण्यण् । कुक्कुटस्येवाक्षिणी अस्य कुक्कुटाक्षः । एष्विञ् प्राप्तः । रेवती । अश्वपाली । मणिपा-ली । द्वारपाली । वृकवञ्ची । वृकग्राह । वर्णग्राह । दण्डग्राह । कुक्कुटाक्ष ।

गोत्रस्त्रियाः कुत्सने ण च ॥ १४९ ॥

गोत्रं या स्त्री तदभिधायिनः शब्दाण्णठकौ स्तः । सामर्थ्यादपत्ये कुत्सायां पितुरसंविज्ञाने मात्रा व्यपदेशात् कुत्सा । गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः । पुंवद्भावाद् गार्ग्यशब्दाण्णठकोः कृतयोः यस्येति च आपत्यस्य च तद्धिते इत्यल्लोपयलोपौ । यद्यपीह प्रकृतेर्वृद्धत्वाण्णस्य णित्वं नोपयुज्यते । तथापि ग्लुचुकायन्या अपत्यं ग्लौचुकायन इत्यत्र वृध्यर्थं तद्बोध्यम् । गोत्रेति किम् । कारिकेयः । स्त्रियाः किम् । औपगवस्यापत्यं युवा औपगविः । इह केनचिद्दोषेणौपगवस्य निन्दितत्वात्तदपत्येऽपि कुत्सा बोध्या । कुत्सने किम् । गार्गेयः । मातामहादेर्लालयतः प्रयोगोऽयमिति नास्ति कुत्सा । स्त्रीभ्यो ढगिति ढक् ।

वृद्धाद ठक् सौवीरेषु बहुलम् ॥ १५० ॥

कुत्सन इत्येव । वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक् स्यात् कुत्सायाम् । सुवीरदेशोद्भवाः सौवीराः । भागवित्तेर्भागवित्तिकः । पक्षे फक् । भागवित्तायनः । तृणविन्दोरौत्सर्गिकोऽण् । ततष्ठक् । पक्षे इञ् । तार्णबिन्दविकः । तार्णबिन्दविः । अकशापः शुभ्रादिः । आकशापेयः । तस्यापत्यमाकशापेयिकः । आकशापेयिः । अत्र वृत्तिकाराः । भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः । तृतीयश्चाकशापेयो गोत्राद् ढक् बहुलं तत इति त्रीनेव पर्यजीगणत् ।

फेश्छच ॥ १५१ ॥

वृद्धात्फिञन्तात् सौवीरगोत्रादपत्ये छठकौ स्तः कुत्सायाम् । यमुन्दस्यापत्यं तिकादिभ्यः फिञ् यामुन्दायनिः । तस्या-

पत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्सने किम् । यामुन्दायनिः । फिञन्तादौत्सर्गिकस्याणो रायक्षत्रियेति लुक् । सौवीरेष्वित्येव । यामुन्दायनिः । अत्र वृत्तिकाराः । यमुन्दश्च सुयामा च वार्ष्यायणिफिञः स्मृता इति पर्यजीगणत् । अत्र वार्ष्यायणीति शब्दरूपापेक्षया नपुंसकनिर्देशः । फिञ इति । फिञन्ता इत्यर्थः । स्मृता इति । एते त्रयः फिञन्ताश्छठकोः प्रकृतयः स्मृता इत्यर्थः । सुयामशब्दस्तिकादिः । सुयाम्नोऽपत्यं सौयामायनिः । तस्यापत्यं सौयामायनीयः । सौयामायनिकः । वृषस्यापत्यं फिञ् । वार्ष्यायणिः । तिकादित्वात्फिञ् । दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्येत्यायन्नादेशे कृते युट् । तस्यापत्यं वार्ष्यायणीयः । वार्ष्यायणिकः । इदं च परिगणनं भाष्यविरुद्धम् । यूनि लुगित्यत्र तैकायनीयशब्दे च्छस्य भाष्ये उदाहरणात् । अत एव तत्र वृत्तिकारोऽपि तथैवाह । इह तु मतान्तरमुपन्यस्तवानित्यवधेयम् ।

फाण्टाहृतिमिमताभ्यां णफिञौ ॥ १५२ ॥

सौवीरेष्वित्येव । कुत्सन इति निवृत्तम् । आभ्यां क्रमादेतौ स्तः । फाण्टाहृतः । मैमतायनिः । सौवीरेषु किम् । फाण्टाहृतायनः । मैमतायनः । फाण्टाहृतेरिञन्तत्वान्मिमतस्य नडादित्वात्फक् । यद्यपीह सूत्रे यथासंख्यं नास्तीति सूत्रकृतोऽभिमतं णस्य णित्करणाज्ज्ञापकात् । वृत्तिकारोऽप्येवम् । तथापि भाष्यवार्त्तिकयोर्यथासंख्यमेव स्थितम् । फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात् प्रातिपदिकस्य । पुंवद्भावप्रतिषधार्थं तु । उक्तं वेति हि वार्तिककारः । अस्यार्थः । णस्य णित्वं माऽस्तु । स हि यथासंख्यन्यायात् फाण्टाहृतेरेव विधीयते । तत्रे न्ततया वृद्ध-

त्वाण्णित्त्वस्य फलं नास्ति। ननु फाण्टाहृता भार्या यस्य सः फाण्टाहृताभार्य इत्यत्र वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधार्थं णित्वं स्यादिति चेन्न । गोत्रस्त्रियाः कुत्सने ण चेति सूत्रे वार्तिककृतैवोक्तोत्तरत्वात्। तत्र हि गार्गीभार्य इत्यत्र पुंवद्भाववारणार्थं णित्वमित्याशङ्क्य स्त्रियां युवसंज्ञापर्युदासाद् गोत्रत्वेन णप्रत्यय एव नास्तीति सिद्धान्तितम् । तदुक्तं गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनमिति । अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमिति तत्रैव वार्तिककृता मतान्तरं दर्शितम्। तस्यायं भावः । गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रम् । न हि सा गर्गस्यापत्यम् । नापि पौत्रप्रभृति । येन गोत्रं स्यात् । तथाचैको गोत्रे गोत्राद्यूनीति नियमद्वयस्याप्रवृत्तौ प्रत्ययमाला दुर्वारा । तत्र गार्गीभार्ये फाण्टाहृताभार्ये च णित्वफलं सुलभमिति इदं तु मतं सिद्धान्तेत्युक्तम् । तद्बीजं तु मातृवंशं प्रत्यपि अपतनहेतुतया अपत्यत्वमस्ति। पौत्रप्रभृतीति च व्यवहितापत्यपरम् । अनुवाद्यकोटिप्रविष्टस्य पुंस्त्वस्याविवक्षितत्वात् । तस्मादेक एव प्रत्यय इति ।

कुर्वादिभ्यो ण्यः ॥ १५३ ॥

एभ्यो ण्यः स्यात्। कौरव्याः ब्राह्मणाः । यत्तु कुरुनादिभ्यो ण्य इति वक्ष्यते तत्र क्षत्रियादित्यधिकृतम्। तद्राजत्वाल्लुक् । कुरवः क्षत्रियाः । इह गणे रथकारशब्दः पठ्यते । स जातिविशेषपरः । माहिष्येण करण्यां तु रथकारः प्रजायते इति स्मृतेः । कारित्वेदुत्तरसूत्रेणैव सिद्धो ण्यः । केशिनीशब्दः पठ्यते। तत्र स्त्रीलिङ्गनिर्देशसामर्थ्यात्पुंवद्भावो नेति वृत्तिकारः। पुंलिङ्गे त्वनभिधानान्न भविष्यतीति भाव इति हरदत्तः । वेनाच्छन्दसीति पठ्यते । भाषायां तु वैन्यो राजेति प्रामादिकमिति

वृत्तिः । वावदूकशब्दोऽत्र पठ्यते । वदेर्यङन्तादत एव निपातनादूकप्रत्यय इति माधवः । उलूकादयश्चेत्युणादिसूत्रेणेत्यन्ये । वामरथस्य करावादिवत्स्वरवर्जितमिति पठ्यते । अस्यार्थः । रायप्रत्ययान्तस्य वामरथस्य यञन्तकरावादेरिव कार्यं स्याद्वाद्युदात्तं विनेति । बहुषु वामरथाः । स्त्री वामरथी वामरथ्यायनी च । युवा वामरथ्यायनः । वामरथाश्छात्राः वामरथानि सङ्घाङ्कलक्षणानि । इह क्रमेण यञञोश्चेति लुक् । यञश्च प्राचां ष्फ तद्धित इति ङीप्ष्फौ । यञिञोश्चेति फक् । करावादिभ्यो गोत्रे । सङ्घाङ्कलक्षणेष्वित्यराचेत्येतानि कार्याणि रायतिदिश्यन्ते । सम्राजः क्षत्रिय इति पठ्यते । सम्राजोऽपत्यं साम्राज्यो भवति क्षत्रियश्चेत् । साम्राजोऽन्यः ।

सेनान्तलक्षणकारिभ्यश्च ॥१५४॥

एभ्यो रायः स्यात् । हारिषेरायः । एति संज्ञायामगादिति षत्वस्यासिद्धत्वात्सेनान्तोऽयम् । लाक्षरायः । साधु कुर्वन्तीति कारिणः शिल्पिनः । तेभ्यो यथा । तान्तुवायः । कौम्भकार्यः । प्राचां मतेनापि त्यः । उदीचां तु परत्वात्फिञ् । परेण फिञा बाधात् । ननु पूर्वसूत्रे एव वाग्रहणात्सिद्धे किमनेन सूत्रेण । मैवम् । जातसेनोग्रसेनादिभ्यो रायेन मुक्ते ऋष्यन्धकेत्यराप्रसङ्गात् । सिद्धान्तेत्यनेनेञ्भवति । तक्ष्णोऽण उपसंख्यानम् । ताक्ष्णः । पक्षे ताक्षरायः ।

तिकादिभ्यः फिञ् ॥ १५५ ॥

एभ्यः फिञ्स्यादपत्ये । तैकायनिः । तिक आस्कन्दने । तिक्नोतीति तिकः । इगुपधात्कः । किं तवास्तीत्याचष्टे कितवः ।

आख्यानण्यन्तात् पचाद्यच् । पृषोदरादित्वान्मलोपः । संपूर्वाज्ज्ञानातेरातश्चोपसर्गे इति कः । स्त्रियां टाप् । संज्ञा । बाले बद्धा शिखा यस्य स बालशिखः । द्वाविमावित्येके । बलतेरार्यन्तात्पचाद्यच् । बालः । तस्य बालायनिः । शिखाशब्देन तद्वान् लक्ष्यते । शैखायनिः । उरसा शेते उरशः । अन्येभ्योऽपीति डः पृषोदरादित्वात्सलोपः । शट कुत्सायां पचाद्यच् । ततो गर्गादित्वाद्यञ् । शाट्यः । ततो यूनि फिञ् । सिन्धुशब्दाद्व्यञ्मगधेत्यण् । सैन्धवः । अपियूनि फिञ् । यममुनत्तीति यमुन्दः । शकन्ध्वादिः । प्रशस्तं रूपमस्या इति रूप्यः । रूपादाहतप्रशंसयोर्यप् । ग्रामे भवो ग्राम्यः । नील वर्णे । इगुपधात्कः । नीलः । अम रोगे । औणादिक इत्रः अमित्रः । गौकक्ष्यो गर्गादियञन्तः । कृग्रोरुच्च । कुरुः । देवस्येव रथोऽस्य देवरथः । तितलिनोऽपत्यम् । औत्सर्गिकोऽण् नस्तद्धिते इति टिलोपः । तैतलः । उरशशब्दो व्युत्पादितः । तस्माज्जनपदशब्दात् क्षत्रियादित्यञ् । औरशः ।

## कुरुनादिभ्यो ण्यः ॥ १५६ ॥

कौरव्यः । क्षत्रिय एवेह गृह्यते । औरशेन साहचर्यात् । यस्तु कुर्वादिभ्यो राये ब्राह्मणः कौरव्यस्तत इञेव । अत एव रायक्षत्रियार्षेतिसूत्रे कौरव्यः पिता पुत्रश्चेति सकलवृत्तिकारैरुदाहृतम् । भूरि अस्यास्तीति भूरिकः । व्रीह्यादिः । पक्षे कपिलकादित्वाल्लत्वम् । भूलिकः । ताभ्यामत इञ् । भौरिकिः । भौलिकिः । चुप मन्दायां गतौ । रायन्ताच्छतरि चोपयन् । तस्यापत्यं चौपयतः । त्विट परप्रेष्ये । प्राग्वत् त्वैटाटायतः । शीकृ सेचने । शैकयतः ।

क्षितमाचक्षाणः क्षितयन् तस्यापत्यं क्षैतयतः। ध्वजवतोऽपत्यं ध्वाजवतः। द्वावित्यन्ये। ध्वज गतौ। रायन्तात्पचाद्यच्। वनोतेः क्त वतः। चदि आल्हादे। ततो रमम्। चन्द्रमाः। यद्वा स्फायितञ्चीति रक् चन्द्रः। चंद्र इति मीयते चन्द्रमाः चन्द्रे मो डिच्चेत्यसिः। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्। चन्द्रमा अप्स्वन्तरेत्यादौ मध्योदात्तः पठ्यते। तस्यापत्यं चान्द्रमसायनिर्बुधः। शोभते ऽसौ शुभः। इगुपधात्कः। गमेर्गः। गङ्गा। वृञ एरायः। वरेण्यः। सर्वधातुभ्यो मनिन्। यानं याम। शोभनं यामास्य सुयामा। अरट्टो नाम जनपदः ततो जनपदशब्दादित्यञ्। आरट्टः। वह्यं करणम्। वह्यमिव वह्यका। निपातनादित्वाभावः। खलाय हिता खल्या। खलयवेति यत्। वृषु सेचने। इगुपधात्कः। वृषः। लोमानि कायति लोमका। उदकमिच्छत्यात्मनः उदन्या। यज्ञयोगाद्यज्ञा। एते तिकादयः।

कौसल्यकार्मार्याभ्यां च ॥ १५७॥

कोसलकर्मारशब्दाभ्यां फिञ्स्यात् तत्सन्नियोगेन यकारश्चागमः। यदि तु वृद्धेत्कोसलेतिञ्ङन्तात् कोसलशब्दात्कारिलक्षणण्यन्तात् कर्मारशब्दाच्चायं विधिः स्यात्तदा यून्येव प्रसज्येत। अतो मूलप्रकृतेरेवेष्यते। आह च फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्येति। पूर्वान्तकरणे तु दागव्यायनिरित्यत्र ओर्गुणो न स्यात्। आदिष्टस्य कृतायन्नादेशस्येत्यर्थः। अन्यथा प्रतिपदोक्ते युटि कृतेऽनादित्वाद्यादेशो न स्यात्। दागव्यायनिः। कौसल्यायनिः। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः। अथ कथं कौसल्यापतिरिति भट्टिः नहि

रामः कौसल्लस्यापत्यम् । उच्यते । यूनोऽप्यपत्यत्वसामान्यवि-वक्षाऽस्तु । इतो मनुष्यजातेरिति ङीषन्तात् कौसल्यायनीशब्दा-द्यूनि ढक् । तस्याब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति लुक् । लुक् तद्धितलुकीति ङीषो लुक् ।

अणो द्व्यचः ॥ १५८ ॥

अणन्ताद्व्यचः फिञ् स्यादिञोऽपवादः । कर्तुरपत्यं कार्त्रः तस्य कार्त्रायणिः । गोत्राद्युवप्रत्ययस्येति लुक् तु न भवति विधा-नसामर्थ्यात् । न च कर्तुश्छात्रः कार्त्रस्तदपत्ये वचनं चरितार्थ-मिति वाच्यम् । अपत्यग्रहणस्यावृत्त्याऽपत्ये योऽण् तदन्तादेव फिञ्विधानादिति प्राञ्चः । तच्चिन्त्यम् । कर्तृशब्दस्य कुर्वादिषु पाठात् । तथा च कर्तुरपत्यं कार्त्र्य इति वार्धमानेनोदाहृतम् । तस्मादिह भर्तृगन्त्रादि उदाहार्यम् । अणः किम् । दाक्षिः । द्व्यचः किम् । औपगविः ।

उदीचां वृद्धादगोत्रात् ॥ १५९ ॥

अगोत्राद्वृद्धात्फिञ्स्यादुदीचां मतेन । आम्रगुप्तायनिः उदीचां किम् । आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । वा नामधे-यस्येति वृद्धत्वात्पक्षे फिञ् भवत्येव । दाक्षायरायोऽश्विनीतया-दितारा इत्यमरः । अगोत्रादिति किम् । औपगविः ।

वाकिनादीनां कुक् च ॥ १६० ॥

एभ्यः फिञ् स्यात्तत्सन्नियोगेनैषां कुगागमश्च । वाकिनका-यनिः । वचनं वाकः । सोऽस्यास्तीति वाकिनः । अत एव नि-पातनादिनन् । तद्धिता इति बहुवचनाद्वा फलिनवदिनन् । अ-गारे एधते गारेधः पृषोदरादित्वादादिलोपः । शकन्ध्वादित्वा-

त्पररूपम् । कायतेरौणादिकः कः । काकः । एषां त्रयाणां पूर्वेण फिञि सिद्धे कुगागमार्थं वचनम् । कार्कटस्यापत्यं कार्कट्यः । गर्गादिः । कुर्वादिर्वा । लङ्घयतेर्लङ्का । अत एव निपातनाद्धकारस्य ककारादेशः । चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । एषामुभयार्थं ग्रहणम् । उदीचामित्यधिकारात्पक्षे यथायथमिञादयः । तत्र चर्मिवर्मिणोरण् । काकाशब्दाद्व्यच इति ढक् । यञन्तात्फक् शेषेभ्य इञिति विवेकः । चर्मिवर्मिणोर्नलोपश्चेति गणसूत्रम् । चार्मिकायणिः । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वचनम् । नच कुक् परादिरस्त्विति वाच्यम् । कस्यानादित्वादादेशाभावप्रसङ्गात् । किञ्च । लिङ्गविशिष्टपरिभाषया चर्मिणीवर्मिणीभ्यां प्रत्ययेऽपीदमेव रूपमिष्यते । कुकि तु भत्वाभावात् पुंवद्भावो न स्यात् ।

पुत्रान्तादन्यतरस्याम् ॥ ॥ १६१ ॥

पुत्रान्तात्फिञि परे कुग्वा स्यात् फिञ् तूदीचां वृद्धादित्यनेनैव । तथा च त्रैरूप्यम् । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः ।

प्राचामवृद्धात्फिन् बहुलम् ॥ १६२ ॥

अपत्येऽर्थे । ग्लुचुकायनिः । प्राचां किम् । ग्लौचुकिः । बहुलग्रहणान्नेह । दाक्षिः ।

मनोर्जातावञ्यतौ षुक् च ॥ १६३ ॥

समुदायार्थो जातिः । मानुषः । मानुष्यः । अपत्ये कुत्सिते मूढेमनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः । णत्वविधानार्थमिदम् । अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वम् । विहितानुष्ठानाच्च कुत्सितत्वम् ।

अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६४ ॥

अपत्यत्वेन विवक्षितं पुत्रादि गोत्र संज्ञं स्यात् । गार्ग्यः । अपत्यत्वेन विवक्षितं किम् । वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूत् । न च पौत्रग्रहणसामर्थ्यात्तद्व्युदासः । रथाद्यचेतन-व्यावर्त्यात्सार्थक्यात् । न चैवमप्यङ्गिरसः पौत्रे गर्गस्यानन्त-रेऽतिप्रसङ्गः सम्बन्धिशब्दतया यदीयपौत्रप्रभृति तं प्रत्येव गो-त्रत्वात् । एवञ्च पौत्रत्वस्य वास्तवस्यैव प्रवेशाद् गार्गिः । प्रत्य-नन्तरापत्यत्वेन विवक्षायामपि गोत्रत्वं निष्प्रत्यूहम् । अत एव युवानं विना नापत्ये प्रत्ययमिति सिद्धान्तः । स्यादेतत् । गर्गापत्यस्य तृतीयादेरपत्यमिति विवक्षायां गर्गापत्यशब्दाद्युव-प्रत्ययप्रसङ्गः । गर्गस्य हि । चतुर्थे जीवद्वंश्ये गर्गस्य गोत्रा-त्प्रत्ययेन भाव्यम् । गोत्रत्वं च गार्ग्यस्येव गर्गापत्यस्याप्य-विशिष्टम् । अत्र हरदत्तः । संज्ञाप्रकरणमुल्लङ्घ्यापत्यप्रत्ययप्रक-रणे गोत्रसंज्ञाविधानसामर्थ्यादपत्यप्रत्ययेनोपस्थितस्यैव गोत्रत्वं नत्वपत्यादिशब्दैरपि । न च ते तद्राजा इत्यत्र तच्छब्दे-नाञादीनामेव परामर्शार्थं मध्ये गोत्रयुवसंज्ञाकाण्डमिति वाच्यम् । एतावन्मात्रे ह्युद्देशेऽञादयस्तद्राजा इत्येव सूत्रयेत् । अत्र वार्तिकम् । जीवद्वंश्यं च कुत्सितमिति । गार्ग्यस्त्वमसि जाल्म । जीवद्वंश्येन हि वृद्धाधीनतयास्थेयम् । यस्तु वृद्धान-नादृत्य स्वातन्त्र्यं कुरुते तस्यौद्धत्यात्कुत्सितत्वं बोध्यम् । वृत्तिकारस्तु वान्यस्मिन्नित्यस्मादनन्तरं वृद्धस्य च पूजायां यूनश्च कुत्सायामिति सूत्रद्वयं प्रक्षिप्य युवसंज्ञाविकल्पं व्याख्यत् । तत्राद्यमप्राप्तविभाषात्वात्प्रवृत्तिपरं द्वितीयन्तु निवृत्तिपरं तथा च युवसंज्ञानिवृत्तौ सत्यां गोत्रत्वं सिध्यतीति तद्व्याख्यातारः । तत्र वार्तिकवचसां सूत्रेषु प्रक्षेपो निर्बीजः । विकल्पोक्तिश्च

भाष्यवार्तिकानारूढत्वान्निर्मूलेति स्पष्टमेव ।

जीवति तु वंश्ये युवा ॥ १६५ ॥

इह पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणम्यते व्याख्यानात् । तुर्भिन्नक्रमो युवेत्यस्मात्परो बोध्यः । स चैवकारार्थे । वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञा । गार्ग्यायणः । संज्ञासमावेशे शालङ्काः पैलीया इत्यत्र दोषः स्यात् । तथाहि । शलङ्कोरपत्यं शालङ्किः । पैलादिषु पाठादिञ् । शलङ्कादेशश्च । ततः शालङ्केरपत्यं युवा यञिञोश्चेति फक् । पैलादिभ्यश्चेति लुक् । ततः शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षयामिञश्चेत्यणि शालङ्का इति भवति । तथा पीलाया अपत्यं पीलाया वेत्यणि पैलः । तस्यापत्यं युवाऽणो द्व्यच इति फिञ् तस्य पैलादिभ्यश्चेति लुक् । ततः पैलस्य यूनश्छात्राः पैलीया इति भवति । तत्र गोत्रयूनोः समावेशपक्षे गोत्रेऽलुगचीति फक्फिञोरलुक् प्रसज्येत । नच परत्वाद्यूनि लुग्भविष्यतीति वाच्यम् । फक्फिञोरन्यतरस्यामिति विकल्पापत्तेः । न च सिद्धान्तेऽपि विकल्पः शङ्क्यः । स हि यूनि लुक एवापवादः नतु पैलादिभ्यश्चेत्यस्य अनन्तरस्येतिन्यायात् । न चानपवादत्वेऽपि परत्वाद्विकल्पः स्यादेवेति वाच्यम् । परादप्यन्तरङ्गस्य पैलादिभ्यश्चेत्यस्य बलीयस्त्वादिति दिक् । अत्र वार्तिकं वृद्धस्य च पूजायाम् । युवसंज्ञेति शेषः । गार्ग्यायणः । युवसंज्ञका हि प्रायेणाल्पवयस्काः वृद्धनियन्त्रणात् समर्यादाः । तदधीनत्वादेव सुखिनश्चेत्यादि प्रसिद्धम् । तेन वृद्धोऽपि युवत्वेन पूजां मन्यते । इत्यारोपेणापीदं पूर्वोक्तं वार्तिकं गतार्थम् । वृत्तिकारस्तु सूत्रेष्वेव वान्यस्मादिति सूत्रात्परं प्रचिक्षेपेत्युक्तम् ।

भ्रातरि च ज्यायसि ॥ १६६ ॥

ज्येष्ठे भ्रातरि जीवति कनीयान् चतुर्थादिर्युवा स्यात् । गार्ग्यादिषु मृतेष्वपि जीवत्यग्रजेऽनुजो गार्ग्यायणः ।

वान्यस्मिन्सपिण्डे स्थविरतरे जीवति ॥ १६७ ॥

भ्रातृभिन्ने स्थानवयोभ्यामुत्कृष्टे सपिण्डे जीवति जीवदेव चतुर्थादि युवसंज्ञं वा स्यात् । गर्गस्य भ्रातरि पितृव्यादौ वा जीवति जीवंश्चतुर्थो गार्ग्यायणः । गार्ग्यो वा । अन्यस्मिन् किम् । भ्रातरि जीवति जीवतो विकल्पो मा भूत् पूर्वसूत्रं तु मृते चतुर्थादौ सावकाशम् । सापिण्ड्यं सप्तपौरुषम् । सपिण्डे किम् । उदासीने मा भूत् । स्थविरतरे किम् । स्थानवयोभ्यामन्यतरेण वाऽपकृष्टे मा भूत् । इह सूत्रे जीवतीति तिङन्तम् । यो जीवति स युवेत्यर्थात् । मृतस्तु जीवत्यपि स्थविरतरे गार्ग्य एव न तु गार्ग्यायणः ।

जनपदशब्दात्क्षत्रियादञ् ॥ १६८ ॥

जनपदवाचकं यत् क्षत्रियवाचि प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तादञ् स्यादपत्ये । पाञ्चालः । यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः क्षत्रिये त्वेकवचनान्तास्तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेव । लुब्योगाप्रख्यानादिति सूत्रयतो भगवत उभयवाचिताभ्युपगमेन सन्देग्धव्यम् । ऐक्ष्वाकः । ऐक्ष्वाकौ । दाण्डिनायनादिसूत्रेण टिलोपे निपातितः । जनपदशब्दात्किम् । द्रुह्योरपत्यं द्रौह्यवः । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्यया भवन्तीति वक्तव्यम् । पञ्चालानां राजा पाञ्चालः । अवृद्धादपि बहुवचनविषयादिति प्राप्तस्य

वुञोऽपवादः । मागधः । द्व्यञ्मगधेत्यण् । पूरोरण् वक्तव्यः । पौरवः । पुरुशब्दस्याजनपदशब्दत्वात् प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे तु द्व्यञ्मगधेत्येव सिद्धम् । पाण्डोर्ड्यण् वक्तव्यः । पाण्ड्यः । डकारष्टिलोपार्थः । णकारो वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधार्थः । युधिष्ठिरपितृवाचकस्य गुणवाचिनश्च पाण्डोर्नेह ग्रहणम् । जनपदशब्दादित्युक्तेर्हि तदधिपतिवाच्येवोपतिष्ठते ।

साल्वेयगान्धारिभ्यां च ॥ १६९ ॥

आभ्यामञ्स्यात् । जनपदशब्दादित्यञं बाधित्वा वृद्धेत्कोसलेति ञ्यङि प्राप्तेऽञः प्रतिप्रसवः क्रियते । साल्वेयः । गान्धारः । तस्य राजनीत्युक्तत्वात् साल्वेयो राजा । गान्धारो राजा ।

द्व्यञ्मगधकलिङ्गशूरमसादण् ॥ १७० ॥

एभ्योऽण स्यादञोऽपवादः । द्व्यच् । आङ्गः । वाङ्गः । सौह्मः । वङ्गानुत्खाय तरसा इति रघुः । आत्मा संरक्षितः सुह्मैरिति च । मागधः । कालिङ्गः । शौरमसः । तस्य राजनि आङ्गो राजा ।

वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ १७१ ॥

वृद्धादिदन्तात्कोसलाजादशब्दाभ्यां च ञ्यङ् स्यादिञोऽपवादः । वृद्धात् । आम्बष्ठ्यः । सौवीर्यः । द्व्यज्लक्षणोऽण् परत्वाञ्ञ्यङा बाध्यते । दार्वस्यापत्यं दार्व्यः । इत् । आवन्त्यः । कौसल्यः । अजादस्यापत्यं आजाद्यः । तपरकरणं किम् । कुमारी नाम जनपदसमानशब्दः क्षत्रियः । तस्यापत्यं कौमारः । राजनि आम्बष्ठ्यो राजा । आवन्त्य इत्यादि ।

कुरुनादिभ्यो ण्यः ॥ १७२ ॥

कुरोर्नकारादिभ्यश्च ण्यः स्यात् । कुरोर्व्यच्लक्षणस्याणो नादिभ्यस्त्वञोऽपवादः । कौरव्यः । नैषध्यः । परत्वाद्वृद्ध्सुमगधेत्यणं ण्यो बाधते । नैप्यः । तस्य राजनि । कौरव्यो राजा । कथं कौरव्याः पशव इति वेणीसंहरणम् । तत्र साधुरिति यद्बोध्यः । एतेन तस्यामेव रघोः पाण्ड्या इति व्याख्यातम् । सनैषधस्यार्थपतेः सुतायामित्यादौ तु शैषिकोऽण् बोध्यः ॥

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७३ ॥

जनपदशब्दात्क्षत्रियादित्येव । सल्वा क्षत्रिया तन्नामिका तस्या अपत्यं द्व्यच इति ढक् साल्वेयः । अणपीष्यते । साल्वावयव अपदातौ साल्वादिति निर्देशात् । न च निपातेन ठको बाधः । साल्वेयगान्धारिभ्यांश्चेति निर्देशात् । साल्वा क्षत्रियेति तु वृत्तौ दीर्घपाठः प्रामादिकः । सलेर्वप्रत्यये वृद्ध्यभावात् । अत एव वृत्तौ तन्नामिकेत्युक्तिः सङ्गच्छते । तद्धि तन्नामिकाणः प्राप्त्यर्थम् । तत्प्राप्तिश्चावृद्धादेवेति दिक् । साल्वस्य निवासः साल्वो जनपदः तदवयवा उदुम्बरादयः । साल्वावयवेभ्यः प्रत्यग्रथकलकूटअश्मकशब्देभ्यश्चापत्ये इञ्स्यादञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । तस्य राजनि औदुम्बरी राजा ॥

उदुम्बरास्तिलखला मण्डकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञकाः ॥

इति वृत्तिः । एतच्च उदाहरणमात्रम् । तेन बुध । अजमीढ आजक्रन्द । एभ्योऽपि भवति । तथाच द्व्यञ्मगधेतिसूत्रे ऽणो-

ञ्यङ्ग्रायेञो विप्रतिषेधेनेति वार्तिकं व्याचक्षाणो भगवानाह। इञोऽवकाशः। आजमीढिः। आजक्रन्दिः। अणः स एव। इहोभयं प्राप्नोति। बुध बौधिरिति।

ते तद्राजाः ॥ १७४ ॥

ते अञादय एतत्संज्ञाः स्युः। प्राचीनास्तु तच्छब्देन न परामृश्यन्ते। गोत्रयुवसंज्ञाकाण्डेन विच्छेदात्। संज्ञाप्रयोजनं बहुषु लुक्। महासंज्ञाकरणमन्वर्थसंज्ञार्थं तद्राजमाचक्षाणास्तद्राजा इति। तेन जनपदस्य राजन्यपत्यवदिति सिध्यति।

कम्बोजाल्लुक्॥ १७५॥

अस्मात्तद्राजस्य लुक् स्यात्। कम्बोजः। कम्बोजौ। कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्। चोलः। शकः। इह द्व्यज्लक्षणस्याञो लुक् अन्येभ्यस्तु अणः। केरलः। यवनः। कम्बोजाः समरे सोढुमिति रघुः। काम्बोजा इति दीर्घपाठस्तु प्रामादिकः। न च शैषिकेणाणा निर्वाहः। गोत्रेऽलुगचीत्यलुकि छप्रत्ययेनाणो बाधादित्याहुः। तन्न। यस्कादिभ्यो गोत्र इत्यधिकारोक्तस्यैव लुकोऽलुका बाधात्। मूलप्रकृतेरणः सुवचत्वाच्च। वस्तुतस्तु कम्बोजोऽभिजनो येषामिति विग्रहः। सिन्धुतक्षशिलादिभ्योऽणञावित्यण्। सिन्ध्वादिषु कम्बोजशब्दपाठस्य सर्वसंमतत्वात्। तस्य राजनीत्येके कम्बोजो राजा।

स्त्रियामवन्तिकुन्तिकुरुभ्यः॥ १७६ ॥

एभ्यस्तद्राजस्य स्त्रियां लुक् स्यात्। अवन्ती। कुन्ती। कुरूः। अवन्तिकुन्तिकुरुभ्यो ञ्यङो लुकि कृते इतः मनुष्यजातेरिति ङीप्। कुरोरार्यस्य लुकि ऊङुत इत्यूङ्। स्त्रियां किम्। आम्बष्ठ्यः।

अतश्च ॥ १७७ ॥

तद्राजस्याकारस्य स्त्रियां लुक् स्यात्। शूरसेनी। मद्री। दरत्। कथं। माद्रीसुतौ फलेपुष्पे समृद्धे इति। मद्रीति पठनीयमिति हरदत्तः। स्यादेतत्। अता तद्राजो विशेष्यताम्। तथाच विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामपि लुगस्तु। न्याय्यन्यायात्। मैवम्। अवन्तिकुरुभ्यो लुग्वचनवैयर्थ्यापत्तेः। तस्मादत इति विशेष्यमेव। तेन कौसल्या सिद्धा। अत इति तपरकरणं तु स्पष्टार्थम्। अस्येत्युक्ते हि संदेहः स्यात्। इञ एवायं संनिहितत्वादिदमा निर्देशः। किं वा वर्णमात्रस्येति।

न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥

एभ्यस्तद्राजस्य न लुक् स्यात्। अतश्चेति प्राप्तो निषिध्यते। प्राच्येभ्यः क्षत्रियेभ्यस्तावत्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी। एते शरावत्याः प्राञ्चो जनपदाः। भर्गादिग्रहणमप्रागर्थं भार्गी। कारूशी। कैकेयीत्यादि। कथं तर्हि प्राक्केकयीत इति भट्टिः। जन्यजनकभावेऽपि पुंयोगलक्षणो ङीष्। शार्ङ्गरवादिङीन् गौरादिङीष् वा इत्युक्तं पुंयोगादिति सूत्रे। भृञो गः। भर्गः। कृञ उः। करुः तं वष्टि। मूलविभुजादित्वात्कः। करूशः चिनोतेः कय आदेश्च कः। बहुलवचनादित्संज्ञाभावः। केकयः। कशेर्मीरः। साल्वशब्दो निरुक्तः शोभनानि स्थानान्यस्य सुस्थानः। उरसा शेते उरशः। डः। कुरुनादिभ्यो ण्यः। कौरव्यः। इति भर्गादिः। यौधेयी। शौक्रेयी। शौभ्रेयी। युधायाः शुक्रायाः शुभ्रायाश्चापत्यम्। द्व्यच इति ढक्। शुभ्रशब्दाच्छुभ्रादिभ्यश्चेति। ततः स्वार्थे पर्श्वादियौधेयादिभ्योऽणञावित्यञ्। शार्ङ्गरवाद्यञ इति ङीनि आ-

घुदात्तत्वम् । यदि त्विहातश्चेत्यञो लुक् स्यात्तदा ढगन्तत्वान्ङीपि उदात्तनिवृत्तिस्वरः स्यात् । न च लुप्तेऽप्यञि प्रत्ययलक्षणेनाञन्तत्वान्ङीन् स्यादिति वाच्यम् । अञ्योऽकार इति व्याख्यानात् । अन्यथा शूरसेनी मद्रीत्यादावतश्चेत्यञो लुक्यपि ङीनापत्तेः । ज्यया सहितो बाणोऽस्याः सा ज्याबाणा । तस्या अपत्यं ज्याबाणेयः । ज्य.बाणेत्यन्ये पठन्ति । तत्र ज्याबाणोऽस्याः सा ज्याबाणा । घृ क्षरणे धृञ् धारणे आभ्यां क्तिजन्ताभ्यामितश्चानिञ इति ढक् । घार्तेयः । धार्तेयः । त्रयो गर्ता येषां त्रिगर्ताः । भृञोऽतच् । भरतः । वशेः कर्माणि इक् कृष्यादिभ्य इतीक् । उशय इष्टा नरा यस्य उशीनरः । अन्येषामपीति दीर्घः । इति यौधेयादिः । स्यादेतत् । अतश्चेतिसूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु सन्निधानात् । नतु पाञ्चमिकस्यापि तात्किं यौधेयादिग्रहणेन । सत्यम् । व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहणमिति ज्ञापयितुं यौधेयादिग्रहणम् । तेन पर्श्वाद्यणः स्त्रियां लुक् सिध्यति । तथाहि । पर्शः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं सङ्घः स्त्रीत्वविशिष्टः द्व्यञ्मगधेत्यण् । तस्यातश्चेति लुक् । पुनः पर्श्वादिलक्षणः स्वार्थिकाण् । तस्यापि लुक् । ऊङुतः पर्शूः । एवं रक्षाः । रक्षसः क्षत्रियस्यापत्यं स्त्रीत्वविशिष्टः सङ्घः । पूर्ववदण् । द्वयस्यापि लुक् । अत्वसन्तस्येति दीर्घः । असुरी । जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक् । जातिलक्षणो ङीष् । तदेतदुक्तं वार्तिककृता । पर्श्वादिभ्यो लुग्वक्तव्यः । यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुक इति ।

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् । पादश्चायं समाप्तः ॥

तेन रक्तं रागात् ॥ १ ॥

रज्यतेऽनेनेति रागः । शुक्ले वर्णान्तरापादनमिह रञ्जेरर्थः । तृतीयान्ताद्रागविशेषवाचिनो रक्तमित्यर्थे यथास्वमणादयः स्युः । कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । रागात्किम् । देवदत्तेन रक्तं वस्त्रम् । कथं हारिद्रौ कुक्कुटस्य पादाविति । उपमानाद्भविष्यति । हारिद्राविव हारिद्राविति ।

लाक्षारोचनाट्ठक् ॥ २ ॥

शकलकर्दमौ तु वार्त्तिकं दृष्ट्वा सूत्रे प्रक्षिप्तौ । लाक्षया रक्तो लाक्षिकः । रौचनिकः । शाकलिकः । कार्दमिकः । शकलकर्दमाभ्यामणपीष्यत इति वृत्तिकारः । शाकलः । कार्दमः । भाष्यादौ तु नैतदस्ति । नील्या अन् वक्तव्यः । नीली ओषधिविशेषः । तया रक्तं नीलम् । पीतात्कन् वक्तव्यः । रागद्रव्यविशेषः पीतं तेन रक्तं पीतकम् । हरिद्रामहारजनाभ्यामञ् वक्तव्यः । हारिद्रम् । माहारजनम् ।

नक्षत्रेण युक्तः कालः ॥ ३ ॥

तृतीयान्तान्नक्षत्रवाचिनो युक्तेऽर्थेऽण् स्याद्युक्तः स कालश्चेत् । नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते । पुष्येण युक्तः कालः पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । पौषी रात्रिः । पौषमहः । नक्षत्रेण किम् । चन्द्रमसा युक्ता रात्रिः । कालः किम् । पुष्येण युक्तश्चन्द्रः ।

लुबविशेषे ॥ ४ ॥

पूर्वेण विहितस्य प्रत्ययस्य लुप् स्यान्न तु षष्ठिदण्डात्मकस्य कालस्यावान्तरविशेषे गम्यमाने । अद्य पुष्यः । षष्ठिदण्डात्मकस्येत्ययं विशेषस्तु पूर्वसूत्रानुवृत्तिबलाल्लभ्यते । तेनाद्येत्युक्त्या न ह्यो न श्व इति विशेषे गम्यमानेऽपि लुप् भवत्येव । अविशेषे किम् । पौषी रात्रिः । पौषमहः । पौषो मुहूर्त्तः । कथं तर्हि पौष्योषोहोरात्र इति चेत् अवयवद्वयरूपस्य विशेषप्रतीतेरिति गृहाण । पौर्णमास्यामयं लुम्न । विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति लिङ्गात् । तेन पुष्ययुक्ता पौर्णमासी पौषीति सिद्धम् । श्रवणशब्दात्तु भवति । अत एव लिङ्गात् । अबाधकान्यपि निपातनानि । तेन श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्येति सिद्धम् ।

संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥

आभ्यां परस्य प्रागुक्तप्रत्ययस्य लुप्स्याद्विशेषेऽपि । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः । श्रवणशब्दे युक्तवद्भावस्तु न विभाषाफाल्गुनीश्रवणेति लिङ्गात् । ङीप् तु अण्योऽकार इति व्याख्यानान्न ।

द्वन्द्वाच्छः ॥ ६ ॥

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः स्याद्विशेषे चाविशेषे च । राधानुराधीया रात्रिः । तिष्यपुनर्वसवीयमहः । अविशेषे अद्य राधानुराधीयम् । अद्येत्यस्याव्ययत्वेऽपि तद्विशेषणस्य क्लीबत्वं लोकात् । न च लुबविशेष इति लुबण इव छस्यापि स्यादिति वाच्यम् । पूर्वोपस्थितेन अणैव तस्य नि-

राकाङ्क्षत्वात् । एतदेव हि मध्येऽपवादयीयेऽपि तत्वम् ।

दृष्टं साम ॥ ७ ॥

तेनेति तृतीयान्ताद्दृष्टमित्यर्थे ऽण् स्याद्यद्दृष्टं साम चेत्तत् । वासिष्ठं साम । यस्य साम्नो विशेषे विनियोगो येन ज्ञातस्तत्तेन दृष्टमित्याहुः ।

कलेर्ढक् ॥ ८ ॥

अणपवादः । कलिना दृष्टं कालेयं साम । यत्तु व्याकरणाधिकरणे भट्टैरुक्तं यदकालयत्तत्कालेयस्य कालेयत्वमिति श्रुतिविरुद्धेयं पाणिनिस्मृतिरिति तत्प्रौढिवादमात्रम् । एकस्मिन्नेव सामनि कलिदृष्टत्वस्य कालायितत्वस्य चाविरोधात् । तन्त्रेणावयवार्थद्वयसम्भवाच्च । अत एवाह भर्तृहरिः ।

वैरवासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित्कथं चिदाख्याता निमित्तावधिसङ्करैरिति ॥

अस्यार्थः वीरेषु भवं वीरैर्लब्धं वीराणामिदमिति निमित्तसङ्करेण वैरशब्दो व्याख्यातः । अतिशयेन वासयन्तीति वा वसिष्ठेन प्रोक्तमधीयत इति वा ।निमित्तस्य सङ्करः प्रकृतिप्रत्ययावधिसङ्करश्च । गिरौ शेते गिरिं श्यति उपभोगेन तनूकरोति गिरिरस्यास्तीति वा एकागारिकशब्दोऽप्येकेनागारेण जयतीति एकमगारं प्रयोजनमस्येति वा निमित्तसङ्करेण व्याख्यातः । एतेन वामदेवादिति उत्तरसूत्रमपि व्याख्यातम् । वामं वा इदं देवेभ्यः समजनि तद्वामदेव्यस्य वामदेव्यत्वमिति श्रौतव्युत्पत्त्यन्तरस्य वामदेवदृष्टत्वेन सह विरोधात् । एतेन एतत्सूत्रद्वयं श्रुतिविरोधादप्रमाणमिति पार्थसारथेरुक्तिः परा-

स्ता । विरोधस्य वासिद्धेः । अभ्युपत्यापि ब्रूमः अर्थवादानां स्वार्थे तात्पर्य्यविरहात्तत्परस्य व्याकरणस्य कथं तैर्बाधः तथात्वे वा अहीनो वा प्रकरणादित्यधिकरणे कथं खप्रत्ययस्वरेणाहर्गणसाध्यत्वं व्याख्यः यदेनं सर्वे न हासिषुस्तदहीनस्याहीनत्वमिति श्रुत्या बाधापत्तेरिति दिक् । अत्र वार्त्तिकम् । सर्वत्राग्निकलिभ्यां ढगिति । अयमर्थः । सूत्रकृता हि साऽस्य देवतेत्याधिकारेऽग्नेर्ढक् उक्तः । दृष्टं सामेत्यधिकारे तु कलेर्ढगिति तादिदं सूत्रद्वयमपनीय प्राग्दीव्यत इत्यस्मादनन्तरमग्निकलिभ्यां ढगिति पाठ्यमिति । अग्निना दृष्टं साम आग्नेयमग्नौ भवमग्नेरागतं अग्नेः स्वं वा आग्नेयं यथा स्यात् । एवं कलेरागतं कलेः स्वं कलौ भवं कालेयमित्यादि । अत्र श्लोकवार्त्तिकम् ।

दृष्टे सामनि जाते वा ऽयण् डित् द्विर्वा विधीयते ।
तीयादीकङ् न विद्याया गोत्रादङ्कवदिष्यते ॥

जातेऽर्थे यो द्विरण् स च वाडिदित्यन्वयः । उशनसा दृष्टं साम औशनसम् । औशनम् । जाते । शातभिषः । शातभिषजः । इह हि प्राग्दीव्यत इति प्राप्तोऽण् कालाट्ठञा बाधितः संधिवेलादिसूत्रेण प्रतिप्रसूत इत्ययं द्विरुक्तोऽण् । अतो वा डित्वम् । तीयादीकक् । अयञ्च स्वार्थे । द्वैतीयीकः । तार्तीयीकः । वेत्येव । द्वितीयः । तृतीयः । न विद्यायाः । द्वितीया विद्येत्येव । गोत्रादङ्कवत् । इदं च दृष्टं सामेत्यत्रैव । औपगवकं अङ्के यो दृष्टः प्रत्ययः स सर्वोऽप्यतिदिश्यते न तु साक्षादङ्कशब्दमुच्चार्य विहित एव तेन सङ्घाङ्कलक्षणेष्वित्यस्याण् गोत्रचरणाद् वुञित्यस्य चायमतिदेशः ॥

वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेवेन दृष्टं साम वामदेव्यम् ।
सिद्धे यस्येतिलोपेन किमर्थं ययतौ ङितौ ।
ग्रहणं मा तदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥

नञाश्रयः स्वरो नञ्स्वरः उत्तरपदान्तोदात्तत्वम् । अत दर्थ इति सूत्रावयवेन ययतोरिति सूत्रं लभ्यते । तदयमर्थः । ययतोश्चेति सूत्रेण विधीयमानं नञ उत्तरस्य ययदन्तस्यान्तोदात्तत्वं अवामदेव्यशब्दे मा भूत्किन्त्वव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थमनयोङित्वम् । यग्रहणेन हि ड्यग्रहणं न भवति । निरनुबन्धकग्रहणे न सानुबन्धकस्येति । तथा यद्ग्रहणेन ड्यत्ग्रहणं न भवति तदनुबन्धकग्रहणेनातदनुबन्धकस्येति । एते च परिभाषे इहैव ङित्वेन ज्ञापिते । तत्राद्यायाः प्रयोजनम् । पूरणगुणेति सूत्रे तव्यतो ग्रहणं मा भूत् दिव औदित्यत्र दीव्यतेर्माभूदिति । द्वितीयस्यास्तु अङ्ग्रहणे चङ्ग्रहणं मा भूत् श्वयतेरः अश्वत् नेह अशिश्वियदिति ।

परिवृतो रथः ॥ १० ॥

तृतीयान्तात्परिवृतेऽर्थेऽण् रथश्चेत्सः । वस्त्रैः परिवृतो वास्त्रो रथः । तदेकान्तग्रहणं कर्त्तव्यम् । नेह पुत्रैः पौत्रैः परिवृत्तो वा ।

पाण्डुकम्बलादिनिः ॥ ११ ॥

मत्वार्थीयेनेनिना सिद्धेऽणबाधनार्थं सूत्रम् । पाण्डुकम्बलो गजास्तरणं तेन परिवृतः पाण्डुकम्बली रथः ।

द्वैपवैयाघ्रादञ् ॥ १२ ॥

अणोऽपवादः । स्वरे विशेषः । द्वीपिव्याघ्रशब्दाभ्यां विका-

रभूते चर्मणि वाच्ये प्राणिरजतादिभ्योऽञ् । द्वीपिनष्टिलोपः तदन्तात्प्रकृतसूत्रेण पुनरञ् । द्वैपो रथः । वैयाघ्रः ।

कौमारापूर्ववचने ॥ १३ ॥

कुमार्या अण् निपात्यते अपूर्वतायां द्योत्यायाम् । कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादुभयत्रापि प्रत्ययः। अपूर्वत्वं तु पाणिग्रहणविषयकं तदुभयत्र स्त्रिया एवेत्यादि सर्वं निपातनाल्लभ्यते। अन्येनापरिणीतां कुमारीं परिणीतवान् कौमारः पतिः। द्वितीयासमर्थादुपयन्तरि प्रत्ययः। कुमारी या पतिं लब्धवती सापि भवत्येव। सूत्रारम्भे कृतेऽपि तस्य दुर्वारत्वात्। एवं तावत्कौमारः पतिरिति सिद्धम् । स्त्रियां तु पुंयोगलक्षणो ङीप् प्रत्यासत्त्या च यत्प्रयुक्तोऽस्य कौमारव्यपदेशः सैव कुमारी न तु स्त्र्यन्तरम् । एतच्च सूत्रारम्भेऽप्यावश्यकम्। पुंयोगङीपा प्रयोगातिप्रसक्तेस्तुल्यत्वादिति दिक् ।

तत्रोदधृतममत्रेभ्यः ॥ १४ ॥

सप्तम्यन्तात्पात्रवाचिन उद्धृतमित्यर्थेऽण् स्यात् । शरावे उद्धृत ओदनः शारावः। मालिकः। कार्परः। शरावादावुद्धृत्य निहित इत्यर्थः। सूत्रे ह्युद्धरतिरुद्धरणपूर्वके निधाने वर्त्तते । अत एव सप्तमीसमर्थविभक्तिः सङ्गच्छते । भुक्तोच्छिष्ट इत्यर्थ इति वृत्तिकाराः । अवशिष्ट इति तदर्थः । तथाच कल्पसूत्रेषु व्यवहारः उच्छिनष्टि न सर्वं जुहोतीति। अत्रैवोद्धरणशब्दोपि प्रसिद्धः बाहुलकात्कर्माणि भूते ल्युट् । सास्मिन्पौर्णमासीत्यतः प्राक् तत्रेत्यनुवर्तते । तेन सप्तम्यन्तादेव प्रत्ययः।

स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥

व्रतं शास्त्रितो नियम इति वृत्तिः। शास्त्रेण विहितः शास्त्रितः। प्रातिपदिकाद्धात्वर्थे इति णिजन्तात्कर्मणि क्तः। व्रतं चेह समुदायोपाधिः। स्थण्डिले शेते स्थाण्डिलो भिक्षुः।

संस्कृतं भक्षाः ॥ १६ ॥

सप्तम्यन्तात्संस्कृतेऽण् स्यात् यत्संस्कृतं भक्षाश्चेत्ते। भ्राष्ट्रे संस्कृता भ्राष्ट्राः।

शूलोखाद्यत् ॥ १७ ॥

पूर्वेण प्राप्तस्याणोपवादः ॥ शूले संस्कृतं शूल्यं मांसम्। उखा पात्रविशेषः तत्र संस्कृतं उख्यम्। कथमुख्योग्निः न ह्यसौ भक्ष इति चेत्। सत्यम्। भवार्थे दिगादित्वात् यदित्याहुः।

दध्नष्ठक् ॥ १८ ॥

दध्नि संस्कृतं दाधिकम्। संस्कारश्चेह लवणादिना। यस्तु संस्कृतार्थे प्राग्वहतेः स तृतीयान्तात्। तेन दध्ना संस्कृतोऽपि दाधिक इति विवेकः।

उदश्वितोऽन्यतरस्याम् ॥ १९ ॥

ठक् स्यात् पक्षेऽण् ॥ इसुसुक्तान्तात् कः। औदश्वित्कः। औदश्वितः।

क्षीराड्ढञ् ॥ २० ॥

अत्र संस्कृतमित्येव संबध्यते न तु भक्षा इति। तेन यवाग्वामपि भवति। क्षैरेयीति। टिड्ढाणञिति ङीप् ॥

सास्मिन् पौर्णमासीति ॥ २१ ॥

सेतिप्रथमासमर्थात्तदर्थनिष्ठसत्ताधिकरणे प्रत्ययः स्याद्यः

प्रथमान्तस्यार्थः पौर्णमासी चेत्सा । इतिशब्दाल्लौकिकीं विवक्षामनुसारयति । तेन संज्ञायामेवायं प्रत्ययः । सूत्रे संज्ञायामिति वृत्तिकृता प्रक्षिप्तम् । तत्तु भाष्यादिविरोधादितिशब्देन गतार्थत्वाच्चात्रोपेक्ष्यम् । पौषी पौर्णमासी अस्मिन् पौषः । मासार्द्धमाससंवत्सराणामियं संज्ञा । नेह । पौर्णमासी अस्मिन्दशरात्रे । भृतकमासेव । भृता एव भृतकाः कर्मकराः तेषां हि कर्मकरणादारभ्य त्रिंशदहोरात्रात्मकः । सावनो मासः । स पौष्या पौर्णमास्या तद्वानपि न पौषाख्यः । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहिः । प्रज्ञादेराकृतिगणत्वादत एव वा निपातनादण् यद्वा माश्चन्द्रमाः भीमो भीमसेन इतिवत् । पूर्णोमाः पूर्णमाः । तस्येयं पौर्णिमासी । वस्तुतस्तु महाराजप्रोष्ठपदाट्ठञित्यत्र तदस्मिन् वर्त्तत इत्यर्थे पूर्णमासादण उपसंख्यानात्सिद्धम् ।

आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥

पूर्वेण प्राप्तस्याणोऽपवादः । अग्रे हायनमस्या इत्याग्रहायणी । प्रज्ञादेराकृतिगणत्वादण् । पूर्वपदात्संज्ञायामग इति णत्वम् । आग्रहायणी पौर्णमासी अस्मिन्नाग्रहायणिको मासः संवत्सरो वा । अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः । निपातनात्पौर्णमास्यामपि लुप् । आश्वत्थिकः ।

विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥ २३ ॥

एभ्यः पौर्णमासीशब्देभ्यः प्राग्विषये ठग्वा स्यात्पक्षेऽण् । फाल्गुनो मासः । फाल्गुनिकः । श्रावणः । श्रावणिकः । कार्तिकः । कार्तिकिकः । चैत्रः । चैत्रिकः ।

सास्य देवता ॥ २४ ॥

सेति प्रथमान्ताद्देवतावाचकादस्येत्यर्थे अण् स्यात् । द्रव्यत्यागे उद्देश्या देवता इन्द्रो देवतास्य ऐन्द्रं हविः । आदित्यम् । बार्हस्पत्यम् । कथमैन्द्रो मन्त्र इति । मन्त्रस्तुतस्यापि देवतात्वेन ग्रहणाददोषः । कथमाग्नेयो वै ब्राह्मणो देवतयेति उपमानात् । सर्वत्राग्निकलिभ्यामित्युक्तत्वाद्वा । सति प्रकृते पुनः सेत्युक्तिः संज्ञार्थकस्य इतिशब्दस्य निवृत्त्यर्था ।

कस्येत् ॥ २५ ॥

कशब्दः प्रजापतेर्वाचकः तस्य इकारोन्तादेशो विधीयते प्रत्ययसन्नियोगेन । कायं हविः । इत्वे कृते यस्येतिलोपः प्राप्तः परत्वादादिवृद्ध्या बाधते । श्रीर्देवतास्य श्रायमितिवत् । सोमाव्यणित्यत्रैव कग्रहणं तु न कृतम् । यस्येतिलोपात्परत्वादादिवृद्धौ कृतायामपि यस्येतिलोपापत्तेः । सकृद्गतिन्यायाश्रयणे तु कसोमाव्यणिति शक्यं कर्त्तुम् । इह कायस्य हविषः संप्रैषे कल्पका एव विवदन्ते । तत्र कायानुब्रूहीति न्याय्यमेव कस्मा अनब्रूहीति तु आर्षम् ।

शुक्रात् घन् ॥ २६ ॥

अणोऽपवादः । शुक्रियं हविः । शुक्रियो मन्त्रः ।

अपोनप्त्रपांनप्तृभ्यां घः ॥ २७ ॥

अपोनप्त्रियं हविः । अपांनप्त्रियं हविः । इह अपोनपात् अपांनपात् इति देवतानामधेये । अनयोः प्रत्ययसंनियोगेनोक्तं रूपं सूत्रे निपात्यते । अपोनपाते अपांनपातेऽनुब्रूहीति संप्रैषौ भवतः । वेदे तु अपोनप्त्रे स्वाहा अपांनप्त्रे स्वाहेति छा-

न्दसः प्रयोगः ।

छ च ॥ २८ ॥

अपोनप्त्रीयम् । अपांनप्त्रीयम् । योगविभागो यथासंख्यनिवृत्त्यर्थः । छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् । पैङ्गाक्षीपुत्रीयम् । तार्णविन्दवीयम् । शतरुद्राद् घश्च । अस्माच्छघौ वक्तव्यावित्यर्थः ॥ शतरुद्रियशतरुद्रीये । शतशब्दोऽनन्तवचनः । शतं रुद्रा देवतास्येति घछौ । तयोर्विधानसामर्थ्याद्द्विगोर्लुगनपत्य इति लुङ् न भवति ।

महेन्द्रात् घाणौ च ॥ २९ ॥

चकाराच्छः स्यात् । महेन्द्रो देवताऽस्य महेद्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् ।

सोमाट् ट्यण् ॥ ३० ॥

सोमो देवतास्य सौम्यं हविः । सौमी ऋक् । टित्वान् ङीप् । हलस्तद्धितस्येति यलोपः ।

वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥

एभ्यो यत्स्यादणोपवादः ॥ वायुर्देवतास्य वायव्यः । ओर्गुणः । वान्तोयीत्यवादेशः । ऋतव्यम् । पित्र्यम् । रीङृत इति रीङ् । यस्येतिचेत्यकारलोपः । उषस्यम् । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां वक्तीति सुपेशसं सुखं रथमित्यादिमन्त्रेषु प्रसिद्धम् ।

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥

एभ्यश्छः स्याच्चाद्यत् । वास्तोष्पतिशब्दात्पत्युत्तरपदलक्ष-

णस्य रायस्यापवादः । शेषेभ्यस्त्वणः । द्यौश्च पृथिवी च द्यावापृथिव्यौ । दिवो द्यावा दिवसश्च पृथिव्यामिति द्यावादेशः । ते देवते अस्य द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरीयम् । शुनासीर्यम् । शुनश्च सीरश्चेति द्वन्द्वः । शुनो वायुः सीर आदित्य इति वृत्तिकाराः । अन्ये त्वेकमेव शुनासीरमिन्द्रस्य गुणमाहुः । तथा चाश्वलायनः। इन्द्रो चाशुनासीर इति । मन्त्रलिङ्गं च भवति इन्द्रं शुनासीरमस्मिन्यज्ञे हवामह इति । मरुत्वतीयम् । मरुत्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । वेश्मभूर्वास्तुरस्त्रियामित्यमरः । वास्तोः पतिर्वास्तोष्पतिः अत एव निपातनात्साधुः । गृहमेधीयम् । गृहमेधशब्दमकारान्तं बह्वृचा अधीयते । मरुद्भ्यो गृहमेधेभ्य इत्याश्वलायनः । गृहमेधास अङ्गतेति मन्तति मन्त्रलिङ्गं च । तैत्तिरीयके तु मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदवमिति पठ्यते । तत्रासौ नकारान्तः । मेधृ सङ्गमे इत्यस्माण्णिनिः । केचित्तु इकारान्तमाहुः । सूत्रे त्वकारान्तादेव प्रत्ययविधानं निर्विवादम् ।

अग्नेर्ढक् ॥ ३३ ॥

आग्नेयम् । सर्वत्राग्निकलिभ्यामिति कलेर्ढगित्यत्रोक्तम् ।

कालेभ्यो भववत् ॥ ३४ ॥

कालाट्ठञिति प्रकरणेन भवे प्रत्यया वक्ष्यन्ते ते साऽस्यदेवतेत्यस्मिन् विषयेऽनेन सूत्रेणातिदिश्यन्ते । वत्करणं सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्ततः स एव भवति । मासिकम् । प्रावृषेण्यम् । वत्करणं किम् । असति तस्मिन् कालेभ्यो भवे ये उक्तास्ते यतः कुतश्चिदपि देवतार्थे

स्यादिति व्याख्याने कालाट्ठञ् इन्द्रादिभ्योऽपि स्यात् । कालेभ्यः स्युरिति व्याख्याने तु भवप्रत्यया न विशिष्येरन् । ततश्च दिगादिभ्यो यदपि भवे विहित इति कालेभ्योऽस्मिन्नर्थे स्यात् । अथापि तन्त्राद्याश्रयणात् कालेभ्योऽपि भवे विहितास्ते कालेभ्योऽपि स्युरिति व्याख्यायेत एवमपि ऋतुभ्योऽणुक्तः मुहूर्त्तादेरपि स्यात् ॥

महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥

महाराजो देवतास्य माहाराजिकम् । तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् । नवयज्ञोऽस्मिन्वर्त्तते नावयज्ञिकः कालः । पूर्णमासादण् वक्तव्यः । पूर्णमासोऽस्यां वर्त्तते पौर्णमासी तिथिः ॥

पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥

एते निपात्यन्ते । तत्र पितृमातृभ्यां भ्रातरि व्यड्डुलचौ । पितुर्भ्राता पितृव्यः मातुर्भ्राता मातुलः । मातृपितृभ्यां पितरि डामहच् । मातुः पिता मातामहः । पितुः पिता पितामहः । मातरि पिच्च । मातामही । पितामही । महोत्राछन्दस्यानङोऽवग्रहदर्शनात् । पितामह इति । अवेर्दुग्धे सोढदूसमरीसचः । एते वक्तव्याः । प्रक्रियालाघवाय षकारे पठनीये सकारपाठसामर्थ्यादमीषां सस्य षत्वं न । अविसोढम् । अविदूसम् । अविमरीसम् । तिलान्निष्फलात् पिञ्जपेजौ । तिलपेजः । वन्ध्यस्तिल इति अमरव्याख्यातारः । पिञ्जश्छदसि डिच्च । तिलपिञ्जः ॥

तस्य समूहः ॥ ३७ ॥

षष्ठ्यन्तात्समूहेऽण् स्यात् । चित्तवदाद्युदात्तं । अगोत्रान्तं । प्रतिपदमनुक्तप्रत्ययमिहोदाहरणम् । तथाहि । अचित्ताट्ठग्वक्ष्य-

ते अनुदात्तादेरञ् गोत्रान्तादूवुञ् केदारादिभ्यः प्रतिपदं यञादयः । काकानां समूहः काकम् । वार्कम् । बाकम् । काकवृकबकशब्दा आद्युदात्ताः । प्राणिनां कुपूर्वाणामिति फिट्सूत्रात् । सूत्रन्तु न्यासकार इत्थं व्याख्यत् । प्राणिविशेषवाचिनां शब्दानां ये आदिभूताः कवर्गात् पूर्वे तेषामुदात्तः स्यादिति । अथादिः प्राक् शकटेरिति ह्यधिकृतम् । हरदत्तोऽप्येवम् । किन्त्वत्र कुपूर्वेषामिति स्यात् तस्मात्फलितार्थकथनमिदम् । कुना हेतुना पूर्वे इति तु तृतीयातत्पुरुषो बोध्यः । पुंसानुज इतिवत् तेन सर्वनामकार्यं न । अस्माभिस्तु फिट्सूत्रवृत्तिमनुसृत्य प्राणिनां कुपूर्वमिति पाठः प्रागुक्तः । स तु निर्बाध एवेत्यवधेयम् । इह शौकमिति वृत्तिन्यासयोरुदाहृतम् । तदन्याय्यम् । खण्डिकादिषु शुकशब्दस्य भाष्ये वृत्तौ च पठितत्वेनाञन्तत्वात् ।

भिक्षादिभ्योऽण् ॥ ३८ ॥

एभ्योऽण् स्यात्समूहे । भिक्षाणां समूहो भैक्षम् । अचित्तत्वाट्ठक् प्राप्तः । गार्भिणम् । भस्याढ इति पुंवद्भावः । इनण्यनपत्ये इति प्रकृतिभावान्नस्तद्धित इति टिलोपो न । इहानुदात्तादेरञ् प्राप्तः सति तस्मिन्नाद्युदात्तत्वं टिलोपश्च स्यात् । युवतिशब्दोऽत्र पठ्यते । तस्य पाठसामर्थ्यान्न पुंवदिति वृत्तिकारः । न चानुदात्तादेरञं बाधितुं पाठः भस्याढे तद्धिते पुंवद्भावः । सिद्धश्च प्रत्ययविधाविति प्रागेव तिप्रत्ययनिवृत्तौ सत्यां कनिन्युवृषीतिकनिनन्ततया आद्युदात्तत्वात् । भाष्यवार्त्तिकयोस्तु इह युवतिशब्दपाठस्य प्रत्याख्यानात् यौवनमित्येव संगतम् । नचैवं भाष्यमते यौवनशब्दोऽपभ्रंश एवेति भ्रमित-

व्यम् । शत्रन्तादनुदात्तादेरञि तस्यापि सिद्धेः । भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । चर्मिन् । वर्मिन् । सहस्र । युवति । पदाति । पद्धति । अथर्वन् । दक्षिण ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ ३९ ॥

एभ्यो वुञ् स्यात् समूहे। लौकिकमिह गोत्रं तच्चापत्यमात्रं न तु पौत्रप्रभृत्येव । औपगवानां समूहः औपगवकम्। उक्षन् । औक्षकम् । औरभ्रकम् । राजकम् । राजन्यकम् ।राजपुत्रकम् । वात्सकम् ।मानुष्यकम्। आजकम् ।वृद्धाच्चेति वक्तव्यम् । वृद्धानां समूहो वार्द्धकम् ।स्यादेतत् ।ग्लौचुकायनकमित्यादौ फिञन्तत्वादाद्युदात्ते चरितार्थोऽयं वुञ् । कापोतमित्यादौ लब्धावकाशेनाप्यनुदात्तादेरञा परत्वाद्बाध्यते तत्कथमौपगवकमित्युदाहृतम् । सत्यम्। अञो वुञ् पूर्वविप्रतिषिद्धमिति वार्तिकाददोषः । इदं ज्ञापकसिद्धमिति खण्डिकादिभ्यश्चेत्यत्र वक्ष्यते। राजन्यकम् मानुष्यकमित्यत्र विवदन्ते । तथाहि अपत्यप्रत्ययान्ताविमौ राज्ञोऽपत्ये जातिग्रहणमिति वार्त्तिके मनोर्जाताविति सूत्रे च जाताविति समुदायोपाधिः हरतेर्दृतीतिसूत्रे पशाविति यथा। अत एव हि तत्र कर्त्तर्येवेन् प्रत्ययः। न चैवमापत्यस्य च तद्धिते नातीति यलोपापत्तिः प्रकृत्या ऽके राजन्यमनुष्ययुवान इति वचनात् । न च गोत्रग्रहणेन गतार्थत्वम्। कृत्रिमस्यैव गोत्रस्य ग्रहणापत्तेः । एतयोः कृत्रिमगोत्रप्रत्ययान्तयोः पुनरुपादानेन तु ज्ञाप्यते अपत्याधिकारादन्यत्र लौकिकगोत्रमिति । इमौ हि शास्त्रे गोत्रान्ततया व्युत्पादनेऽपि लोके जातिपरतयैव प्रसिद्धौ । तथाच यूनि लुगिति सूत्रे

भाष्यम् । राजन्याद् वुञ् मनुष्याच्च ज्ञापकं लौकिकपरमिति । सोऽयं भाष्यवार्तिकारूढः पन्थाः। अपरे तु नेमौ गोत्रप्रत्ययान्तौ शिवादिभ्योऽणिति सूत्र एव गोत्रग्रहणं निवृत्तमिति वृत्तिकारकैयटप्रभृतिभिरुक्तत्वात् । अपत्याधिकारादन्यत्र लौकिकग्रहणं तु व्याख्यानादेव उभयगतिरिहेति भाष्यात् । न चैवं प्रकृतसूत्रे राजन्यमनुष्यग्रहणवैयर्थ्यम् । एतयोरपत्यकृतं नेति ज्ञापनेन सफलत्वात् । तेन यलोपो नेत्याहुः । अन्ये तु जातिरेवार्थो न त्वपत्यमित्याहुः । इह पक्षद्वयेऽपि प्रकृत्याके इति वचनं न कर्त्तव्यमिति तत्वम् ।

केदाराद्यञ् च ॥ ४० ॥

चाद् वुञ् । अचित्तलक्षणस्य ठकोऽपवादः । केदाराणां समूहः कैदारम् । कैदारकम् । गणिकायाश्चेति वार्तिकम् । अत्र यञेव नतु वुञपि गाणिक्यम् ।

ठञ् कवचिनश्च ॥ ४१ ॥

चात् केदारादपि । कवचिनां समूहः कावचिकम् । कैदारिकम् ॥

ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥

ब्राह्मणानां समूहो ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । स्यादेतत् । ब्राह्मणादयो वृद्धाः तेभ्यः प्रकृतो यञेवास्तु । नहि वृद्धाद्यञि यनि वा रूपे विशेषोऽस्ति । न वा स्वरे उभयथाप्याद्युदात्तत्वात् । ठञ् तु नानुवर्त्तिष्यते स्वरितत्वात् । सत्यम् । अन्यतो विधानार्थं यन्वचनम् । तेन पृष्ठादुपसंख्यानमिति वार्त्तिकं गतार्थम् । पृष्ठशब्दः स्तोत्रविशेषस्य संज्ञा । पृ-

ष्ठैः स्तुवत इति श्रुतेः । पृष्ठानां समूहः पृष्ठ्यः । कथं तर्हि पृष्ठ्यः षडह इति तद्वति तदुपचारात् । मत्त्वर्थलक्षणयेत्यर्थः ॥

ग्रामजनबन्धुभ्यस्तल् ॥ ४३ ॥

ग्रामाणां समूहो ग्रामता । जनता । बन्धुता । गजसहायाभ्यां चेति वक्तव्यम् । गजता । सहायता । अह्नः ख इति वक्तव्यम् । क्रतौ । क्रतावित्यपि तस्यैव शेषः । अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतु वन्त उदाहरणम् । अचित्तात्तु आपूपिकं शाष्कुलिकमित्यादौ परत्वाठ्ठगेव । कापोतम् । मायूरम् । तैत्तिरम् । कपोतमयूरशब्दौ लघावन्त इति मध्योदात्तौ तित्तिरिस्त्वन्तोदात्तः । इगुपधात्किः तरतेः सन्वत्तुक् चाभ्यासस्येति किप्रत्ययव्युत्पादितत्वात् । सन्वद्भावेनाद्युदात्तस्तु न भवति । उणादयो बहुलमिति बहुलवचनात् ॥

खण्डिकादिभ्यश्च ॥ ४४ ॥

एभ्योऽञ् स्यात् समूहे । आद्युदात्तार्थं वचनम् । अचित्ताट्ठकं बाधितुं च । खण्डिकानां समूहः खाण्डिकम् । इह क्षुद्रक मालवात्सेनासंज्ञायामिति पठ्यते । तत्र क्षुद्रक मालवादिति योगो विभज्यते । क्षुद्रकस्यापत्यानि जनपदशब्दादिति विहितस्य तद्राजस्य लुक् मालवात्तु वृद्धलक्षणस्य त्र्यङः । ततो द्वन्द्वे समासस्येत्यन्तोदात्तः ततोऽनुदात्तादेरञित्येव सिद्धे गोत्रोक्षेति वुञं बाधितुं वचनम् । स्यादेतत् । यथा जनपदसमुदायस्य जनपदग्रहणेनाग्रहणात्काशिकोसलीया इत्यत्र छ एव न तु जनपदलक्षणो वुञ् तथेहापि गोत्रसमुदायस्यागोत्रत्वाद् वुञः प्राप्तिरेव नास्ति । नच समुदायस्यागोत्रत्वेऽपि मालवस्य गोत्रप्रत्ययान्ततया समुदायात्तदन्तविधिना वुञ्प्राप्तिः समासप्रत्य-

यविधौ तदन्तविधेः प्रतिषेधात् । किञ्च प्राप्तेपि वुञ् परत्वादञैव भाव्यम् । अत्राहुः । इदमेव सामूहिविधिवुञः पूर्वविप्रतिषेधं च ज्ञापयति यावता हि विनानुपपत्तिर्न शाम्यति तावतः सर्वस्य ज्ञाप्यतयेहोभयज्ञापनसम्भवात् तेन वानहस्तिकम् । गौधेनुकमिति तदन्तविधिः सिद्धः । औपगवकमित्यादौ वुञ् च । ततः सेनासंज्ञायामेवेति नियमार्थं द्वितीयं वाक्यम् । तेन क्षौद्रकमालवीसेना । अन्यत्तु क्षौद्रकमालवके । उभयत्रापि मालवादुत्पन्नस्य ञ्यङो गोत्रेऽलुगचीति लुकि प्रतिषिद्धे आपत्यस्येति यलोपः । उक्तं च भाष्ये । अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् । गोत्राद् वुञ् नच तद्गोत्रं तदन्तान्न सः सर्वतः ॥ ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः । सेनायां नियमार्थं वा यथा बाध्येत वाञ् वुञेति । तथाचेत्यस्यायमर्थः । धेनुरनञिकमुत्पादयतीत्यापिशलेः मतम् । इकमुकमित्यर्थः । तेन वृद्धिः सिद्धा । धैनुकम् । अनञिति किम् । अधेनूनां समूह आधेनवम् । उत्सादिपाठादञ् । यद्यप्युत्सादिगणे धेनुशब्द एव पठ्यते तथापि बष्कयासे इति लिङ्गात्तदन्तविधिः । तत्र सामूहिकेषु यदि तदन्तविधिर्न स्यात्तर्हि अनञ्ग्रहणं न कुर्यात् । सेनायामिति द्वितीयवाक्यस्यार्थस्य फलोपन्यासः । उलूकशब्दोऽत्र पठ्यते स लघावन्त इति मध्योदात्तः । यदुलूको वदति इत्यत्र तु छान्दसमाद्युदात्तत्वम् । एवञ्च भाषायामनुदात्तत्वात्पूर्वेणैवाञ् सिद्धः । इह पाठस्तु गर्गादियञन्तस्य कृतलुक इति बोध्यम् । असति हि पाठे उलूकानां समूहार्थविवक्षायां गोत्रेऽलुगचीति लुकः प्रतिषेधादौलूक्यशब्दाद्गोत्राश्रयो वुञ् प्राप्नोति । शुकशब्दोऽत्र पठ्यते प्राणिनां कुपुर्वाणामित्याद्युदात्तत्वादाणि प्राप्ते । युगवरत्रेति पठ्यते । तत्सङ्घातविगृहीतार्थम् । यौगवरत्रम् ।

यौगम् । वारत्रम् ।

चरणेभ्यो धर्मवत् ॥ ४५ ॥

वुञादयश्चरणेभ्यो वक्ष्यन्ते । चरणाद्धर्माम्नाययोरिति तु तत्र वार्त्तिकम् । तदप्यनेनातिदेशसूत्रेण ज्ञापितम् । यतः प्रकृते धर्मे यः प्रत्ययो वक्ष्यते ततः समूहेऽपि स्यादित्यतिदेशार्थमिदं सूत्रम् । कठानां सङ्घः काठकम् । कालापकम् । गोत्रचरणाद् वुञ् छान्दोग्यम् । औक्थिक्यम् । छन्दोगौक्थिकेति ञ्यः । आथर्वणम् । आथर्वणिकस्येकलोपश्चेत्यण् ।

अचित्तहस्तिधेनोष्ठक् ॥ ४६ ॥

साक्तुकम् । आपूपिकादावपि परत्वादण्ं बाधित्वाऽयं ठगेव हास्तिकम् । धैनुकम् । तदन्तविधेर्ज्ञापितत्वाद्धौधेनुकम् । जङ्गलधेनुवलजान्तस्येत्युभयपदवृद्धिविकल्पः । अनञित्युक्तं तेन आधेनवमित्यत्र उत्साद्यञेव ।

केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४७ ॥

आभ्यामेतौ क्रमाद्वा स्तः पक्षे ठगणौ । कैश्यम् । कैशिकम् । अश्वीयम् । आश्वम् ।

पाशादिभ्यो यः ॥ ४८ ॥

पाश्या । तृण्या । इह पोतगलग्रहणं सङ्घातविगृहीतार्थमिति गोवर्धनः । युक्तश्चैतत् । ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथगित्यमरकोशात् । पाश । तृणधूम । वेत्ति । अङ्गार । पोटगल पिटक शकट हल नट वन ।

खलगोरथात् ॥ ४९ ॥

एभ्यो यः स्यात् । खल्या । गव्या । रथ्या ।

इनित्रकट्यचश्च ॥ ५० ॥

खलादिभ्यः क्रमादमी स्युः । खलिनी । गोत्रा । रथकट्या । खलादिभ्य इनिर्वक्तव्यः । डाकिनी । कुटुम्बिनीत्यादि । आकृतिगणोऽयम् । इति सामूहिकाः ।

विषयो देशे ॥ ५१ ॥

षष्ठ्यन्ताद्यथाविहितं प्रत्ययः स्यादत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिवीनां विषयो देशः शैवः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः ।

राजन्यादिभ्यो वुञ् ॥ ५२ ॥

राजन्यादिभ्यो वुञ् स्यात् । राजन्यानां विषयो देशः राजन्यकः । आकृतिगणोऽयम् ।

भौरिक्यायैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५३ ॥

आभ्यां यथासंख्यमिमौ स्तः । भौरिकीणां विषयो देशः भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् । अत्र वार्त्तिकानि । विषयाभिधाने जनपदे लुप् बहुवचनविषयात् । अङ्गानां विषयः अङ्गाः । वङ्गाः । सुह्माः । पुण्ड्राः । गान्धार्यादिभ्यो वा । गान्धारः । गान्धारयः । वासातः । वसातयः । शैवः । शिवयः । राजन्यादिभ्यो वा वुञ् राजन्यकः राजन्यः । दैवयातवाः । दैवयातवकः । वैल्ववनादिभ्यो नित्यम् । वैल्ववनकः । आम्बरीषपुत्रकः । आत्मकामेयकः । न वाऽभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः । अस्यार्थः । यो येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते न

तु निवासमात्रे अनभिधानात् । एवञ्चाङ्गा वङ्गाः सुह्माः पुण्ड्रा इत्यत्र निवासरूपतैव विवक्ष्यते न तु विषयरूपता । राजन्यादेस्तूभयं तत्र विषयो राजन्यकं निवासो राजन्याः । बैल्ववनादिषु विषयत्वविवक्षैव । सर्वं चेदं यथाभिधानं व्यवस्थास्यते तस्मान्मास्तु वार्त्तिकारम्भ इति ।

सोऽस्यादिरिति छन्दसः प्रगाथेषु ॥ ५४ ॥

अक्षरेयत्तानिबन्धनं पङ्क्त्यादिश्छन्दः । तद्वाचकात्प्रथमान्तादादिवाचकादस्येत्यादिमति प्रत्ययः स्यात् स आदिमान् प्रगाथश्चेत् । पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः । आनष्टुभः । जागतः । प्रग्रथ्यत इति प्रगाथः । अकर्त्तरि च कारक इति कर्मणि घञ् । पृषोदरादित्वाद्रेफनकारयोर्लोपः । प्रगीयते इति वा प्रगाथः । गै शब्दे उपिकुषिगर्त्तिभ्यस्थन् । रूढश्चायम् । चतुर्थषष्ठौ पादौ बार्हतो प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येदित्येवमादिवचनाद्यत्र द्वयोर्ऋचोस्तिस्रः क्रियन्ते । नपुंसकात् स्वार्थे उपसंख्यानम् । त्रिष्टुबेव त्रैष्टुभम् । जागतम् । कुटी कुटीर इतिवत् स्वार्थिके कृते लिङ्गान्यत्वम् । कथं तर्हि नपुंसकादित्युक्तम् । वृत्तिविषयस्य तथात्वादिति बोध्यम् ।

संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५५ ॥

सोऽस्येत्यनुवर्त्तते । प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च समर्थेभ्योऽस्येति षष्ठ्यन्तार्थे सङ्ग्रामेऽभिधेयेऽण् स्यात् । सुभद्रा प्रयोजनमस्य सङ्ग्रामस्य सौभद्रः । भरता योद्धारोऽस्य भारतः सङ्ग्रामः ॥

तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५६ ॥

स्पष्टम् । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा ।

प्रहरणं किम् । माला भूषणमस्याम् । क्रीडायां किम् । खड्गः प्रहरणमस्यां सेनायाम् ।

घञः साऽस्यां क्रियेति ञः ॥ ५७ ॥

घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् । श्येनपातोऽस्यां वर्त्तते श्यैनम्पाता मृगया । तिलपातोऽस्यां वर्तते तैलम्पाता स्वधा । श्येनतिलस्य पाते ञे इति मुम् । घञः किम् । श्येनपतनमस्यां वर्तते । क्रिया- किम् । प्राकारोऽस्यां वर्त्तते तदस्यामिति प्रकृते पुनः साऽस्यामित्युक्तिः क्रीडायामित्यस्यानुवृत्तिर्मा भूदिति । दण्डपातोऽस्यां तिथौ वर्त्तते दाण्डपाता मौसलपातेत्यादि ।

तदधीते तद्वेद ॥ ५८ ॥

द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् । व्याकरणमधीते वेत्ति वा वैयाकरणः । द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् । अन्यथोत्तरत्र क्रतुवसन्तादीनामशब्दात्मकतयाध्ययनासम्भवाद्वेदितर्येव प्रत्ययः स्यात् द्विस्तद्ग्रहणसामर्थ्यात् क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अपि प्रत्ययं लभन्ते ।

क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ५९ ॥

क्रतुविशेषवाचिभ्य उक्थादेः सूत्रान्ताच्च ठक् स्यात् । क्रतुशब्दस्तु न गृह्यते स्वरूपपरत्वे ह्युक्थादिष्वेव पठेत् । नापि पर्यायग्रहणम् । उक्थादिषु यज्ञशब्दपाठात् । तस्मात्क्रतुविशेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि प्रत्ययः तत्प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरीति विवेकः । आ-

ग्निष्टोमिकः । वाजपेयिकः । संस्थाविशेषवचनस्याप्यग्निष्टोमश-
ब्दस्य तत्संस्थाके क्रतौ निरूढः प्रयोगः । उक्थशब्दस्तु सा-
मविशेषे रूढः यानि यज्ञायज्ञीयादुत्तरत्र पठ्यन्ते । तान्यधीयाने
ठगणौ द्वावपि नेष्येते अनभिधानात् किन्तूक्थान्यधीत इति
वाक्यमेव भवति । सामलक्षणन्तु प्रातिशाख्यमौक्थिक्यं नाम ।
औक्थिकानामाम्नायः इदमर्थे छन्दोगौक्थिकेति ञ्यः तत्र
लक्षणया वर्तमान उक्थशब्दष्ठकं लभते । उक्थमधीते
वेत्ति वा औक्थिकः । औक्थिक्यशब्दात्तु ठकः प्राप्तिरेव
नास्ति । अण् पुनरनभिधानान्नेति स्थितं भाष्ये । लौकायतिकः ।
उक्थ लोकायत न्याय न्यास पुनरुक्त यज्ञचर्चा क्रम इतर
श्लक्ष्ण संहिता क्रम पद सङ्घट्ट वृत्ति सङ्ग्रह गण गुण आ-
युर्वेद इत्युक्थादयः । सूत्रान्ताट्ठगित्यवशिष्यते ॥ तत्र वा-
र्त्तिकम् । विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृत इति
इकगिति ठगित्यर्थे विद्यालक्षणकल्पान्तादिति अकल्पादेरिति च
पूरणीयमिति फलितोऽर्थः । वायसविद्यिकः । गौलक्षणिकः ।
पाराशरकल्पिकः । सांग्रहसूत्रिकः । अकल्पादेः किम् ।
काल्पसूत्रः । सूत्रान्तस्यैवायं निषेधो न तु विद्याद्यन्तस्य ।
अत एव काल्पसूत्र इत्येव भाष्ये प्रत्युदाहृतमिति कैयटः ।
काल्पविद्य इति तु केषांचिदुदाहरणं प्रामादिकमिति स एव ।
अस्यापवादं वार्त्तिककार एवाह । विद्या चानङ्गक्षत्रधर्मत्रि-
पूर्वेति । अङ्गादिचतुष्टयपूर्वको विद्याशब्दष्ठकं न लभत
इत्यर्थः । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रैविद्यः ।
इह त्रिविधा विद्या त्रिविधा तामधीत इति विग्रहः । तिस्रो
विद्या अधीत इति विग्रहे तु लुक् स्यादित्युक्तं द्विगोर्लुगिति
सूत्रे । अत्र त्रैविद्यशब्दात् स्वार्थे चातुर्वर्ण्यादित्वात् ष्यञि त्रैवि-

द्यमित्यपि पक्षे भवति। तथा च याज्ञवल्क्यः। चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वेति। अत एव पञ्चमे कैयटेन चातुर्वैद्यमित्यत्र चत्वारो वेदा इति चतस्रो विद्या अधीत इति च द्वेधा व्याख्यातं तत्र ठको लुकि स्वार्थे ष्यञि अनुशतिकादित्वादुत्तरपदवृद्धिरिति विशेषः। आख्यायिकेतिहासपुराणेभ्यश्च ठग्वक्तव्य इति शेषः। यावक्रीतमधिकृत्य व्याख्यानं यावक्रीतमुपचारात् तदधीते वेत्ति वा यावक्रीतिकः। भैयङ्गवमधिकृत्य कृतमुपचारात् भैयङ्गवम्। ततः भैयङ्गविकः। वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता तामधीते वेत्ति वा वासवदत्तिकः। अधिकृते ग्रन्थे इत्यत्रार्थे वृद्धाच्छः। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। ततोऽनेन ठक्। एवं सौमनोत्तरिकः। गद्यरूपो ग्रन्थविशेष आख्यायिकेति अधिकृते ग्रन्थ इति सूत्रे हरदत्तः। ऐतिहासिकः। पौराणिकः। अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः। इकन पदोत्तरपदाच्छतषष्टेः षिकन् पथः। अनुसूशब्दः ठकं लभते लक्ष्यलक्षणशब्दौ च। अनुसूर्नाम ग्रन्थः। अनुसूमधीते ठक्। इसुसुगिति कादेशः। केऽण इति ह्रस्वः। आनुसुकः। लाक्षियकः। लाक्षणिकः। सर्वादेः सादेर्द्विगोश्छप्रत्ययस्य लुगित्यर्थः। अत्र द्विगोश्च ल इत्यंशेन द्विगोर्लुगिति सूत्रसिद्धमेवानूद्यते। अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः। सर्ववेदानधीते सर्ववेदः। सर्वतन्त्रः। इहाणो लुक्। वार्त्तिकान्तमधीते सवार्तिकः। अन्तवचने सहशब्दस्याव्ययीभावः। अव्ययीभावे चाकालइति सभावः। ततोऽणो लुक्। द्विगोः। द्वितन्त्रः। पूर्वपादिकः। उतरपदिकः। पदशब्द उत्तरपदं यस्य तस्मादिकन् स्यादितीकन्।

शतशब्दात् षष्ठिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् स्यात् । षो ङीषर्थः । शतपथिकः । शतपथिकी । षष्ठिपथिकः । षष्ठिपथिकी । अत्र वृत्तिकारो बहुलग्रहणं कृत्वा शातपथ इत्यणमप्युदाजहार तत्तु भाष्यादौ नास्ति । इकन् बहुलं पथोत्तरपदादित्युक्थाद्यन्तर्गणसूत्रमिति न्यासकारः ।

क्रमादिभ्यो वुन् ॥ ६१ ॥

अणोऽपवादः । क्रमकः । पदकः । क्रम पद शिक्षा मीमांसा ।

अनुब्राह्मणादिनिः ॥ ६२ ॥

ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीते वेत्ति वा अनुब्राह्मणी । यथार्थे यदव्ययमिति सादृश्ये ऽव्ययीभावादिनिः । मत्वर्थीयेन सिद्धे अध्येतृवेदित्रोरणं बाधितुं सूत्रम् ॥

वसन्तादिभ्यष्ठक् ॥ ६३ ॥

यत्र वसन्तो वर्ण्यते यो वा वसन्ते ऽध्येयः स उपचाराद्वसन्तः तमधीते वेत्ति वासन्तिकः । उक्थादिषु वसन्तादयः पाठ्याः । ते वा वसन्तादिषु । तथा तु न कृतमित्येव । अथर्वन्शब्दो ऽत्र पठ्यते । स उपचारादथर्वणा प्रोक्ते ग्रन्थे वर्तते । शैषिकप्रकरणान्ते भाष्यकारास्तु इत्थमाहुः । तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः । वसिष्ठः । विश्वामित्रः । अनुवाकः । अथर्वणो वा अथर्वा आथर्वण इति । अथर्वाणमधीते आथर्वणिकः । दाण्डिनायनसूत्रे निपातनाट्टिलोपो न । वसन्त वर्षा शरत् हेमन्त शिशिर प्रथम अनुगुण अथर्वन् आथर्वण ।

## प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्ते भवः प्रोक्तः । सौत्रत्वात् संज्ञापूर्वकत्वाद्वा न वृद्धिः । उपचाराद्वा प्रौक्ते प्रोक्तशब्दः । प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । पाणिनिना प्रोक्तं पाणिनीयम् । तदधीयते पाणिनीयाः । वृद्धाच्छोऽत्र । प्रोक्तार्थकः प्रत्ययः । नात्रेञश्चेत्यण् । गोत्रे य इञ् तदन्तादेव स इति सिद्धान्तात् । ततोऽध्येत्रणो लुक् । स्त्रियां स्वरे च विशेषः । असति हि लुकि टिड्ढाणञिति ङीप् स्यात् । अणुस्वरेणान्तोदात्तत्वं च । लुकि सति तु टाप् भवति छस्वरेण मध्योदात्तता च ।

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम् । संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति संख्याया अतिशदन्तायाः कन् । तदधीयते अष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः । संख्याप्रकृतेरिति वक्तव्यम् । संख्याप्रकृतिकप्रत्ययान्तादित्यर्थः । कलापिनो प्रोक्तमधीयते कालापाः । कलापिनोऽण् । नान्तस्य टिलोपे सब्रह्मचारीत्यौपसंख्यानिकष्टिलोपः । ततस्तदधीत इत्यण् । प्रोक्ताल्लुक् । कालापानामाम्नाय इति गोत्रचरणाद्वुञ् । कालापकम् । ततस्तदधीत इत्यण् । तस्याल्लुक् । सति तु लुकि ञित्स्वरेणाद्युदात्तः स्यात् सिद्धान्ते त्वण एव स्वरः । स्त्रियां ङीप् च । कोपधात्किम् । चत्वारोऽवयवा अस्य चतुष्टयम् । तदधीते चातुष्टयः ।

छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

मण्डूकप्लुत्या प्रोक्तादित्यनुवृत्तं छन्दोब्राह्मणसामानाधिकरण्याज्जसन्तं विपरिणम्यते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानि । यथा मपं विना त्र्यन्तं न प्रयुज्यते तथेत्यर्थः । अत एव तन्त्रेणार्थद्वयं विगृह्यते कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य कठचरकाल्लुक् ततोऽध्येतर्यण् तस्य प्रोक्ताल्लुक् । मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थे औत्सर्गिकोऽण् । शेषं यथायोगं प्राग्वत् । मौदाः । पैप्पलादाः । अर्चाभो वैशम्पायनान्तेवासी तस्माण्णिनिः । आर्चाभिनः । वाजसनेयशब्दः शौनकादिः । वाजसनेयिनः । ब्राह्मणानि । ताण्ड्येन प्रोक्तमधीयते ताण्डिनः । आपत्यस्येति यलोपः । भाल्लविशब्द इञन्तः शाट्यशब्दाद्गर्गादियञन्ताद्यञिञोश्चेति फक् । ऐतरेयशब्दः शुभ्रादिढगन्तः । तेभ्यः पुराणप्रोक्तेष्विति णिनिः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः । छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं तद्विशेषप्रतिपत्त्यर्थम् । तेन पुराणप्रोक्तानामेव तद्विषयता । नेह । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि । कण्वादिभ्यो गोत्र इत्यण् । आपत्येति यलोपः । सुतभादौत्सर्गिकोऽण् । सौतभानि । याज्ञवल्क्यादिभ्यः प्रतिषेध इति प्रतिषेधं पठन्ति इह चकारोऽनुक्तसमुच्चयार्थः । कल्पे । काश्यपिनः । कौशिकिनः । काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । सूत्रे पाराशरिणो भिक्षवः । शैलालिनो नटाः । पाराशर्यशिलालिभ्यामिति णिनिः । कर्मन्दिनः । कृशाश्विनः । कर्मन्दकृशाश्वादिनिः । एतच्च सर्वमिह सूत्रे न्या-

सभेदेन भाष्यसाधितमिति वृत्तिकृता चकारेण संगृहीतम् । छन्दोब्राह्मणानीति किम् । पाणिनीयं व्याकरणम् । पैङ्गी कल्पः । पिङ्गशब्दात् पुराणप्रोक्तेष्विति णिनिः ।

अथ चातुरर्थिकाः ।

तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥

प्रथमान्तादस्त्युपाधिकादण् स्यात् अस्मिन्नित्यर्थे प्रत्ययान्तनामा देशश्चेत् । उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः । बाल्वजः । पार्वतः । सकललोकनिरूढे यथा स्यान्नत्वाधुनिकसंकेतितेऽपीत्येतदर्थ इतिशब्दः । भूमनिन्दाद्यर्थपरिग्रहार्थश्च । मतुपोऽयमपवादः । यद्येवमपवादविप्रतिषेधादिनिठनादयः प्राप्नुवन्ति । सत्यम् । तन्नाम्नीत्युक्तेर्न दोषः । तद्धि नामधेयताविरोधिनो बलीयसोऽपि प्रत्ययान् बाधितुं क्रियते ।

तेन निर्वृत्तम् ॥ ६८ ॥

अन्तर्भावितण्यर्थाद्वृत्तेः कर्मणि क्तः । देशे तन्नाम्नीति सूत्रचतुष्टयेऽप्यन्वेति । सहस्रेण निर्वृत्ता साहस्री परिखा । कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ।

तस्य निवासः ॥ ६९ ॥

शैवो देशः ।

अदूरभवश्च ॥ ७० ॥

तस्येत्येव । विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्ता अपि त्रयोऽर्था इह संनिधाप्यन्ते । तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वम् । चतुर्णामर्थानां समाहारश्चतुरर्थी । तत्र भवा हि चातुरर्थिकाः । अध्यात्मादित्वाट्ठञ् ।

तद्धितार्थे द्विगौ तु ठञो लुक् स्यात् । चकारविरहे तु संनिधानाददूरभवार्थ एवोत्तरत्र संबध्येत । सन्निधानात् ।

ओरञ् ॥ ७१ ॥

चातुरर्थिकः । अरडुर्वृक्षविशेषः आरडवम् । नद्यां तु परत्वान्मतुप् । इक्षुमती । द्रुमती ।

मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वच्कमङ्गं यस्य तथाभूतो यो मतुस्तदन्तादञ् स्यात् । सैध्रकावतम् । बह्वजङ्गात्किम् । आहिमतम् । स्यादेतत् । मतोर्बह्वच इत्येवास्तु व्यधिकरणे च पञ्चम्यौ व्याख्यास्येते । बह्वचो विहितो यो मतुस्तदन्तादिति । मैवम् सामानाधिकरण्यस्य न्याय्यतया मत्वन्तं यद्बह्वच् इत्येवास्तु न व्यधिकरणमिति हि युज्यते । ततश्चाहिमतोऽञ् स्यात् । व्यावर्त्यं तु स्ववानिति स्यात् ।

बह्वचः कूपेषु ॥ ७३ ॥

बह्वच्प्रकृतिकात्सुबन्तादञ् स्याच्चातुरर्थिकः कूपेष्वभिधेयेषु । दीर्घवरत्रेण निर्वृत्तः कूपो दैर्घवरत्रः ॥

उदक् च विपाशः ॥ ७४ ॥

विपाश उत्तरे ये कूपास्तेष्वभिधेयेषु अञ् स्याच्चातुरर्थिकः । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तः दात्तः कूपः । उदक्किम् । दक्षिणतः कूपेष्वणेव । दात्तः । गौप्तः । स्वरे विशेषः ।

संकलादिभ्यश्च ॥ ७५ ॥

एभ्योऽञ् स्यात् । कूपेष्विति निवृत्तम् । संकलेन निर्वृत्तः साङ्कलः ॥

स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

सौवीरे तावत् दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी । साल्वे विधूमाग्निना निर्वृत्ता वैधूमाग्नी । प्राचि । ककुदेन निर्वृत्ता काकुदी ।

सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

उवर्णान्तलक्षणस्य कूपलक्षणस्य चाञोऽपवादः । सुवास्तोरदूरभवं सौवास्तवम् । ताण्डवम् । अणूग्रहणं नद्यां मतुपो बाधनार्थम् । सौवास्तवी नदी ॥

रोणी ॥ ७८ ॥

अस्मादण् स्यात् । कूपलक्षणस्याञो ऽपवादः । रौणः कूपः । तदन्तविधिरत्र येन विधिरितिसूत्रे । आजकरोणः ।

कोपधाच्च ॥ ७९ ॥

प्राग्वत् । कार्णछिद्रकः कूपः ॥

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥८०॥

अरीहणादिभ्यः सप्तदशभ्यो गणेभ्यः क्रमाद् वुञादयः स्युश्चतुरर्थ्याम् । सूत्रे कुमुदस्य द्विः पाठेप्येकशेषो न भवति । प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वविधानात् ॥ आदिशब्दः प्रत्येकं संबध्यते । तथाहि अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तं आरीहणकम् । कृशाश्वादिभ्यश्छण् ।

कार्शाश्वीयः । ऋश्यादिभ्यः कः । ऋश्यकम् । कुमुदादिभ्य-ष्ठच् । कुमुदिकम् । काशादिभ्य इलः । काशिलः । तृणादिभ्यः सः । तृणसम् । प्रेक्षादिभ्य इनिः । प्रेक्षी । अश्मादिभ्यो रः । अश्मरा । सख्यादिभ्यो ढञ् । साखेयम् । सङ्काशादिभ्यो ण्यः । साङ्काश्यम् । बलादिभ्यो यः । बल्यम् । पक्षादिभ्यः फक् । पाक्षायणः । पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । प्रगदादिभ्यो ञ्यः । प्रगदिन् प्रागद्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्यष्ठक् । कौमुदिकः । इह शिरीषशब्दो गणत्रये पठ्यते । अरीहणादौ प्रथमकुमुदादौ वराहादौ च । कथं तर्हि लुपि युक्तवदित्यत्र भाष्यं शिरीषाणामपि पक्षे लुबिति वास्तु उभयथापि चातूरूप्ये न विवादः । शैरीषकः । वुञ् । शिरीषिकः । ठच् । शैरीषकः । कक् । शिरीषा इति ।

जनपदे लुप् ॥ ८१ ॥

ग्रामसमुदायो जनपदः तस्मिन् वाच्ये चातुरर्थिकस्य लुप् स्याल्लुबन्तं देशस्य नाम चेत् । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः । मगधाः । पुण्ड्राः । तदस्मिन्नीति किम् । उदुम्बराः सन्त्यस्मिन्निति औदुम्बरो जनपदः । न ह्यत्र लुबन्तं नामधेयम् ।

वरणादिभ्यश्च ॥ ८२ ॥

एभ्यः प्राग्वत् । अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः । नगरं हि देशो न तु जनपदः । आकृतिगणोऽयम् ।

शर्कराया वा ॥ ८३ ॥

अस्माच्चातुरर्थिकस्य वा लुप् स्यात् । ननु वाग्रहणं व्यर्थं प्रथमकुमुदादौ वराहादौ च पाठसामर्थ्यादेव पक्षे ठच्ककोः श्रवणसम्भवात् सत्यम् । अत एव वाग्रहणसामर्थ्यात् पक्षे औत्सर्गिकोऽण् तस्य चायं लुब्विकल्पः । तदिह वक्ष्यमाणठक्छाभ्यां सह रूपषट्कं बोध्यम् । शर्करा । शार्करम् । शर्करिकम् । शार्करकम् । शार्करिकम् । शर्करीयमिति ।

ठक्छौ च ॥ ८४ ॥

शर्कराशब्दादेतौ स्तश्चतुरर्थ्याम् । उदाहृतम् ।

नद्यां मतुप् ॥ ८५ ॥

चातुरर्थिकः । उदुम्बराः सन्त्यस्यामुदुम्बरावती । इक्षुमती । कथं तर्हि भगीरथेन निर्वृत्ता भागीरथीति मतुबन्तस्यातन्नामधेयत्वात् ।

मध्वादिभ्यश्च ॥ ८६ ॥

अनद्यर्थ आरम्भः । मधुमान् ।

कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥

कुमुद्वान् । नड्वान् । वेतस्वान् । अवर्णोपधात्परत्वेन वत्वम् । पूर्वत्रासिद्धे चेति टिलोपो न स्थानिवत् । एकदेशविकृतन्यायेन पदत्वाज्झत्वे प्राप्ते बहिरङ्गत्वाट्टिलोपस्यासिद्धत्वम् । न च षाष्ठी बहिरङ्गपरिभाषा रुं न पश्येदिति वाच्यम् । कार्यकालपक्षाश्रयणात् । नन्वेवम् औत्सीत्यादौ रुः घटी आमलकीत्यादौ जश्त्वं च स्यात् । यस्येतिलोपे कृते

पूर्वस्य स्वादिष्विति पदत्वात् । न च भत्वं यस्येतिलोपस्य स्थानिवद्भावात् । न च पदत्वेप्येवं तस्य रुविधिना सह कार्य्यकालतया पूर्वत्रासिद्धे चेतिनिषेधादिति चेन्न । पदसंज्ञायां यथोद्देशाश्रयणात् । अत एव राम औ इत्यवस्थायां पदत्वे वस्त्रसादाविव स्थानिवद्भावेन रामावित्यादेः पदत्वम् । अन्यथा उभयत आश्रयेऽन्तादिवद्भावप्रतिषेधात्पदत्वं दुर्लभं स्यादिति दिक् । महिषाच्चेति वक्तव्यम् । महिष्मान्नाम देशः । प्रकृतस्यैव मतुपः डित्वातिदेशेन सिद्धे प्रक्रियालाघवाय ड्वतुपि वा कर्तव्ये ड्मतुब्वचनमन्यतो विधानार्थम् । तेन महिषाच्चेत्यपि सूत्रेण सूचितमेव ॥

नडशादाड् ड्वलच् ॥ ८८ ॥

नड्वलः । शाद्वलः । शादशब्दो दोपधः । शादो जम्बालघासयोरित्यमरः । शाद्वलः शादहरिते इति च ।

शिखाया वलच् ॥ ८९ ॥

शिखावलम् । दन्तशिखात्संज्ञायामिति पञ्चमे वक्ष्यति तदेशेपि शिखावल इति रूपस्य सिद्धये इदन्तु निर्वृत्ताद्यर्थे देशे तत्राण्वणो बाधनार्थं च ।

उत्करादिभ्यश्छः ॥ ९० ॥

उत्करीयः ।

नडादीनां कुक् च ॥ ९१ ॥

नडकीयम् । अत्रान्तर्गणसूत्रद्वयम् । क्रुञ्चा ह्रस्वत्वं च । तक्षन्नलोपश्चेति । क्रुञ्चकीयः । तक्षकीयः । क्रुटि तु नलोपासिद्धा-

वपि छस्य ईयो न स्यात् । अप्रत्ययादित्वात् ।

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

शेषे ॥ ९२ ॥

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । स्यादेतत् । तस्येदमिति सूत्रेण चाक्षुषादयः सिद्धाः । दार्षदादयस्तु संस्कृतं भक्षा इत्यनेन तत् किं शेष इति सूत्रेण । न चाधिकारार्थं तदिति वाच्यम् । अधिकारं विनापि घादीनां ट्युट्युलन्तानां अपत्यादिचतुरर्थीपर्यन्तेष्वर्थेष्वप्रवृत्तेर्ज्ञापकेनैव सुसाधत्वात् । तथाहि आर्द्रकशालेत्यादयो वृद्धाः तेषां वृद्धाच्छ इत्येव सिद्धे उत्करादिषु पाठो ज्ञापयति नेतः प्राक् घादयः स्युरिति । गोत्रोक्षेति वुञ्विधिरपीह लिङ्गम् । अन्यथा हि समूहस्यापीदमर्थान्तर्भूततया गोत्रचरणादित्येव वुञः सिद्धे किं तेन । तथा राजन्यादिषु दैवयानशब्दस्यारीहणादिषु भास्त्रायणशब्दस्य च पाठोऽपीह ज्ञापकः तयोरपि गोत्रप्रत्ययान्ततया गोत्रचरणादित्येव वुञः सिद्धेः । तथा फश्छचेत्यत्र वेत्येव ठग्विकल्प्यतां छवचनं तु ज्ञापकमेवापत्यादिषु घादयो नेति । किञ्च । अपत्याद्यर्थानामनुवृत्त्या तस्येदंविशेषतया वा यदि तत्र घादय इष्येरन् तर्हि प्राग्दीव्यतोणित्यत्रैवाणादिभिः सह पठ्येरन् । ननु मा भूदपत्यादि-

व्यावृत्तये शेषाधिकारः। तथापि साकल्यार्थः सः अन्यथा संनिहिते जातार्थ एव घादयः स्युः भवादौ तु प्राग्दीव्यत इति विशिष्टावधिपरिच्छिन्नेषु अर्थेषु विधीयमाना अणादय एव स्युर्न तु घादयः शेषशब्दात्तु सर्वेषु घादयः सिध्यतीति। मैवम्। जाताधिकारानन्तरप्रावृषष्ठबित्यादिभिः सह घादिषु वक्तव्येषु ततः प्राक् पाठसामर्थ्यादेवार्थसाकल्यलाभात्। तस्मात् शेष इति लक्षणं चाधिकारश्चेति वृत्तिरप्यसङ्गता। उभयत्रापि प्रयोजनस्य दुर्लभत्वात्। अत्रोच्यते। शैषिकत्वप्रयुक्तं कार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकारो ज्ञापयति।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः॥
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यत॥ इति।

एतच्च सन्विधौ मतुब्विधौ च भाष्ये पठितम्। अस्यार्थः। शेषाधिकारे भवः शैषिकः। अध्यात्मादित्वाट्ठञ्। मतुबर्थे भवो मतुबर्थीयः। गहादेराकृतिगणत्वाच्छ इति सन्विधौ हरदत्तः। रोगाख्यायामितिसूत्रे तु मत्वर्थाच्छ इति वार्तिकं व्याचक्षाणो हरदत्त आह। मतुना समानार्थो मत्वर्थः तस्मात्स्वार्थे छः कृदधिकारे विधानसामर्थ्यात्कृत्संज्ञा कृदन्तत्वात् प्रातिपदिकत्वं बहुलवचनादभत्वेऽपि यस्येतिलोपः। बाहुलकादेव क्वचिन्न। तसौ मत्वर्थ इति यथा। बाहुलकादेव मतुबर्थशब्दादपि भवति। शैषिकान्मतुबर्थीयादिति यथा। मतुपोऽर्थो मतुबर्थः सोस्यास्तीति मतुबर्थिकः अत इतिठनाविति ठन्। शैषिकप्रत्ययान्ताच्छैषिकः सरूपप्रत्ययो नेष्टः तद्यथा शालायां भवो घटः शालीयः। तत्र भवमुदकम्। पुनश्छो न

भवति । विरूपस्तु स्यादेव तद्यथा अहिच्छत्रे भव आहिच्छत्रः । तत्र भव आहिच्छत्रीयः । दण्डोऽस्यास्तीति दण्डिकः । सोऽस्यास्तीति पुनष्ठन्न नेति तृतीये कैयटहरदत्तौ । इदं च मतुप्सूत्रस्थभाष्यापर्यालोचनमूलकम् । तत्र हि षष्ठ्यर्थे वृत्तं सप्तम्यर्थे वर्त्तते सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे इत्युक्तं तच्चावश्यं वक्तव्यम् । ठञन्तादिनिरपि मा भूदित्येवमर्थम् । न हीनिठनोरर्थभेदः सुलभः सप्तम्यां च न तौ स्मृतावित्युक्तेरुभयोरपि षष्ठ्यर्थत्वात् । स्पष्टं चेदं पाश्चमिककैयटेऽपि । तस्मादिह दण्डिशब्दात् सप्तम्यर्थे यथा मतुब्भवति दण्डिमतीति एवं मत्वन्तादपि प्राप्तोऽनेन निषिध्यत इति तत्वम् । वह्निमद्वानित्यादिनैयायिकप्रयोगस्तु दोषद्वयग्रस्तः । मतुबन्तान् मतुपो निषेधात् । तसावितिभत्वेन जश्त्वासम्भवाच्च । केचित्तु शाब्दिकम्मन्या घटत्ववत्वमित्यादि नैयायिकप्रयोगमपि दूषयन्ति । तन्मन्दम् । त्वतलोरशैषिकत्वात् । विकारावयवप्रत्ययेभ्यः प्रागेव हि शेषाधिकारः । सनन्तादिति । अत्रापि सरूप इत्यपेक्ष्यते सारूप्येण चात्रार्थसादृश्यं लभ्यते सामर्थ्यात् । तेन स्वार्थसनन्तात्सन् स्यादेव जुगुप्सिषते मीमांसिषत इति दिक् ।

राष्ट्रावारपाराद् घखौ ॥ ९३ ॥

आभ्यां क्रमात् घखौ स्तः । राष्ट्रियः । अवारपारीणः । अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । वाचनिकमेवेदम् । सूत्रे तु सङ्घातस्यैव ग्रहणम् । अन्यथा वैषम्यात् संख्यातानुदेशो न स्यात् । अवारीणः । पारीणः । पारावारीणः । प्रकृतिविशेषात्प्रत्ययविशेष इत्येतावन्मात्रमिह प्रकरणे उच्यते । जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥

ग्रामाद्यखञौ ॥ ९४ ॥

ग्राम्यः । ग्रामीणः । उत्तरसूत्रे ग्रामादित्यनुवृत्तेर्ढकञ-पि । ग्रामेयकः ।

कत्र्यादिभ्यो ढकञ् ॥ ९५ ॥

कुत्सितास्त्रयः कत्रयः । बहुव्रीहिर्वा । अत एव निपातनात्कोः कद्भावः । तेन कद्भावे त्रावुपसंख्यानमिति न कर्तव्यम् । कात्रेयकः । उम्भि पुष्कर मोदन कुण्डिन नगर माहिष्मती चर्मरावती । कुल्याया यलोपश्चेत्यन्तर्गणसूत्रम् । अत्र तृतीयो वर्णो लकार इत्येके । डकार इत्यन्ये ।

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ९६ ॥

कौलेयकः श्वा । कौक्षेयकोऽसिः । कौलोऽन्यः । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः।अयं योगः प्रत्याख्यातो भाष्ये । तथाहि । यदा कुशब्दश्च कुले वर्त्तते तदा तस्यापत्यमपि श्वैव । तत्रापूर्वपदादन्यतरस्यामिति ढकञा सिद्धम् । कुक्षिग्रीवाशब्दाभ्यां तु दृतिकुक्षिकलशिवस्त्यहेर्ढञ् । ग्रीवाभ्योऽण् चेत्याभ्यां तत्र भव इत्यधिकृत्य पठिताभ्यां सूत्राभ्यां ढञि कृते अस्यलङ्कारयोः स्वार्थिकः कन् भवति ।

नद्यादिभ्यो ढक् ॥ ९७ ॥

नादेयम् । माहेयम् । पूर्वनगरीति पठ्यते । पौर्वनगरेयम् । पूर्वनगिरीति पाठान्तरम् । प्रकृतित्रयञ्चेदम् । पुरि वने गिरौ च भवं पौरेयं वानेयं गैरेयम् । नदी मही वाराणसी शरावती कौशाम्बीत्यादि ।

दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

दक्षिणादाजित्याजन्तमव्ययमिह गृह्यते पश्चात्पुरोभ्यां साहचर्यात् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । कथं तर्हि नृपः पुरस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैर्कश्चन नुद्यमानः । यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाप्यसिद्धार्थममन्यत स्वमिति । अत्र केचित् । पश्चात्तन्वन्तीति कुसृष्टया व्याचक्षते । अन्ये तु दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं परत्वाद्बाधित्वा कालवाचकात् ट्युट्युलौ एव स्तः । अत एव द्युप्रागितिसूत्रे प्राक्तनमित्युदाहृतं वृत्तौ परत्वाद्यतं बाधित्वा कालवाचिनष्ट्युरिति न्यासकारादयश्च । नन्वेवं प्रकृते पश्चिमदेशस्थत्वस्यालाभादर्थासङ्गतिः पश्चिमकालभवत्वस्य शब्देन लाभे सत्यर्थाद्देशस्यापि लाभादिति वदन्ति । तन्न अग्रादिपश्चाड्डिमजिति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात् । तस्मात् बाधकविषयेप्युत्सर्ग इति कथञ्चित्समर्थनीयम् ।

कापिश्याः ष्फक् ॥ ९९ ॥

कापिशीशब्दात् ष्फक् शेषे । षो ङीषर्थः । कापिशायनं मधु । कापिशायनी द्राक्षा । बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् । अवृद्धादपीति वुञोऽपवादः । बाह्लायनः । और्दायनः । पार्दायनः ॥

रङ्कोरमनुष्येऽण् च ॥ १०० ॥

रङ्कुशब्दादण् स्यात् चात् ष्फक् अमनुष्येऽभिधेये । राङ्कवो राङ्कवायणो वा गौः । रङ्कवो नाम जनपदः ततः प्राग्दीव्यतोऽण् प्राप्तः । तस्यावृद्धादपीति वुञ् बाधकः । तस्य ओर्देशे ठञ् । तस्य कोपधादण् । ततः कच्छा-

दिभ्यश्चेत्यण् प्राप्तः ततः ष्फगणौ विधीयते । कोपधत्वादे-
वाणि सिद्धे रङ्कुशब्दस्य कच्छादिपाठो मनुष्यतत्स्थयोर्वुञ्विधा-
नार्थः । अमनुष्ये किम् । राङ्कवको मनुष्यः । स्यादेतत् ।
रङ्कोरित्येवं सूत्रमस्तु । कच्छादिषु पाठादणः सिद्धेः । मनुष्ये
तु ष्फगणौ बाधित्वा मनुष्यतत्स्थयोर्वुञ् भविष्यति । ये-
ननाप्राप्तिन्यायेनापवादत्वात् । न च तत्स्थे ष्फगणावेव स्त इति
ज्ञापनार्थमिदमिति वाच्यम् । राङ्कवकः कम्बल इत्यत्र वुञ एवे-
ष्यमाणत्वात् । अत्र वृत्तिकाराः । मनुष्य इति पर्युदासात्
प्राणिन्येव ष्फग्विधीयते तेन राङ्कवकः कम्बल इत्यत्र ष्फङ्
न । विशेषविहितेन ष्फकाऽणो बाधो मा भूदित्यण्ग्रहणमपि
कर्त्तव्यम् । एतच्च भाष्यवार्त्तिकाभ्यां विरुध्यते । तथाहि ।
अप्राणिन्यपि ष्फकं स्वीकृत्य शेषस्तत्र प्रत्याख्यातः । आह
च रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् ।
तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् । अण्ग्रहणानर्थक्यं
च कच्छादिभ्योऽण्विधानात् ।

## द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥

एभ्यो यत् । दिवि भवं दिव्यम् । प्राच्यम् । उदीच्यम् ।
इह सूत्रे दिवशब्दो दिवउदित्युत्वेन निर्दिष्टः न तु द्युशब्दः
व्याख्यानात् । अपाची दक्षिणा दिक् । द्वितीयो वर्णः प-
कारो न तु दन्त्योष्ठ्यः । यदिन्द्रप्रागपागुदक् । राजा वृत्रञ्जङ्घ-
न्प्रागपागुदगित्यादौ दर्शनात् । प्राच्यवाचीप्रतीच्यस्ताः पूर्व-
दक्षिणपश्चिमा इत्यमरः । प्रागादयः शब्दा द्विविधा अव्यया
अनव्ययाश्च । अस्तात्यन्ता अव्यया अन्ये तु न । विशेषानु-

पादानादुभयेऽपीह गृह्यन्ते । कालवाचिनोऽव्ययात्तु परत्वात् ट्युट्युलौ । प्राक्तनम् ।

कन्थायाष्ठक् ॥ १०२ ॥

कान्थिकः ।

वर्णौ वुक् ॥ १०३ ॥

वर्णौ या कन्था ततो वुक् स्यात् । ठकोऽपवादः । यथा हि जातं हिमवत्सु कान्थकम् । वर्णुर्नाम नदः तत्समीपदेशो वर्णुः अदूरभवश्चेत्यर्थे सुवास्त्वादिभ्योऽण् । तस्य जनपदे लुप् । न च प्रतिपदविधानाल्लुम्नेति वाच्यम् । सुवास्त्वादिपाठस्य जनपदादन्यत्र कृतार्थत्वात् । वार्णवो ग्रामो वार्णवं नगरमिति यथा । सूत्रे सप्तमीनिर्देशस्तु गम्यमानसत्तापेक्षः कारकाणां क्रिययैवान्वयस्थितत्वात् । तथा च वर्णौ विद्यमाना या कन्थेति विवरीतव्यम् ।

अव्ययात्त्यप् ॥ १०४ ॥

अत्र वार्त्तिकम् । अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः । अमात्यः । अमान्तिकसहार्थयोरिति मेदिनी । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् । उपरिष्टाद्भव औपरिष्टः । पारतः । विभाषापरावराभ्यामित्यसुजन्तः परतः शब्दः ततोऽण् । अव्ययानां भमात्रे टिलोपः । बहिषष्टिलोपविधानात् ज्ञापकादनित्योऽयम् । तेनेह न । आरातीयः । वृद्धाच्छ इति छः । त्यब्नेर्ध्रुव इति वक्तव्यम् । नित्यः । निसो गते इति वक्तव्यम् । निष्ट्यः । निर्गत इत्यर्थः । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिरिति तु वृत्तिकाराः । ह्रस्वात्तादौ

तद्धित इति षत्वम् । तकारस्य ष्टुत्वम् । अरण्याण्णः । आरण्याः सुमनसः । दूरादेत्यः । दूरेत्यः । उत्तरादाहञ् । औत्तराहः । यदा तु उत्तरादाह्प्रत्यये ततोऽण् क्रियते तदौत्तराहशब्दोऽन्तोदात्तोऽपि भवति । अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि । आविष्ट्यो वर्द्धते चारुरासु । आविर्भूत इत्यर्थः ॥

ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥

एभ्यस्त्यब् वा । पक्षे ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्त्यनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे ठञि श्वसस्तुट् चेति तुट् । शौवस्तिकम् ।

तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥

यथासंख्येन । काकतीरम् । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति तु नोक्तम् बहुच्पूर्वान्मा भूत् । बाहुरूप्यम् ।

दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥

अणोऽपवादः । पौर्वशालः । दाक्षिणशालः । असंज्ञायां किम् । संज्ञाभूतायाः प्रकृतेर्मा भूत् । पूर्वेषुकामशमी । दिक्संख्ये संज्ञायामिति समासः । ततोऽणेव । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः । पूर्वेषुकामशमः । पदग्रहणं किम् । स्वरूपग्रहणं मा भूत् । एवं हि दिग्गज इत्यादावेव स्यात् । पदग्रहणसामर्थ्यात्तु व्यधिकरणपदो बहुव्रीहिः । दिशो वाचकं पूर्वपदमस्मिन्निति ॥

मद्रेभ्योऽञ् ॥ १०८ ॥

दिक्पूर्वपदादित्येव । पौर्वमद्रः । आपरमद्रः । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात्तद्धितार्थ

इति समासः । दिशोऽमद्राणामिति पर्युदासादादिवृद्धिः । मद्रेभ्य इति बहुवचननिर्देशात् जनपदवाची गृह्यते न तु भद्रपर्यायः ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥

अस्मादञ् । अणोऽपवादः । दिग्ग्रहणं निवृत्तम् । शिवपुर । शैवपुरम् । प्रस्थपुरवहान्तादिति वुञ् न भवति । वृद्धादिति हि तत्रानुवर्त्तते । उदीच्यग्रामात्किम् । माथुरः । मध्यदेशग्रामोऽयम् । बह्वचः किम् । ध्वजी । पिप्यल्यादिङीपन्तोऽयम् । तत्राणेव । अन्तोदात्तात् किम् । शार्कराधानम् । धानशब्द उदात्तः लित्स्वरे कृते कृदुत्तरपदप्रकृतिस्वरात् ॥

प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ ११० ॥

एभ्योऽण् स्यात् । पूर्वसूत्रस्यापवादः । माहकिप्रस्थः । प्रस्थान्तेति तु नोक्तम् । उत्तमकीर्णीप्रस्थ इत्यस्मान्मा भूदिति । पालदः । पारिषदः । वाहीकशब्दोऽत्र पठ्यते । वृद्धाच्छं बाधितुम् । कोपधादण् तु अवृद्धे सावकाशः । निलीनकान्नैलीनकमिति यथा । यकृल्लोमशब्दोऽत्रपठ्यते । यकृल्लोमनि भवो याकृल्लोमः । अन्निति प्रकृतिभावो न । गणे नलोपनिपातनात् ॥

कण्वादिभ्यो गोत्रे ॥ १११ ॥

कण्वादिभ्यो गोत्रे यो विहितः प्रत्ययः यञिति यावत् तदन्तेभ्यस्तेभ्योऽण् स्याच्छेषे । छस्यापवादः । काण्वाश्छात्राः॥

इञश्च ॥ ११२ ॥

गोत्रे य इञ् तदन्तादण् स्यात् । दाक्षाः । गोत्र इति किम् । सौतङ्गमेरिदं सौतङ्गमीयम् । गोत्रं चेह शास्त्रीयं न

तु लौकिकमित्युक्तं वृद्धिर्यस्येतिसूत्रे तेनेह न पाणिनीयम् ।

न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥

इञश्चेति प्राप्तोऽण् प्रतिषिध्यते । पैङ्गीयाः । प्राष्ठीयाः । काशीयाः । वाशीयाः । काशिवाशि एतौ भरतौ प्राच्यत्वेऽपि पृथगुपात्तौ प्राच्यग्रहणे भरतानामग्रहणस्य द्वितीये ज्ञापितत्वात् । न च काशिशब्दात्काश्यादिभ्यष्ठञ्ञिठौ कथं नेति शङ्क्यम् । चेदिशब्दसाहचर्याद्देशवाचिन एव काशिशब्दस्य तत्र ग्रहणम् । अतो गोत्रान्ताच्छ एवेति सिद्धान्तात ।

वृद्धाच्छः ॥ ११४ ॥

शालीयः । मालीयः । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधीनयं परत्वाद्बाधते । तथाहि । छस्य तेषां चावकाश उदाहरणेषु स्पष्ट एव । आरातीय इत्यत्र त्यपं बाधित्वा छः । अमेहेत्यादिपरिगणनमनाश्रित्येदमुक्तम् । वायसतीर । वायसतीरीयः । रूप्योत्तरपदेन सह छस्य विप्रतिषेधः प्राप्तिमात्राश्रयेणोच्यते । माणिरूप्यक इत्यत्र हि योपधलक्षणो वुञ् छं बाधते । वाडवकर्पीयः । उदीच्यग्रामोऽयम् । उलूका अस्मिन् सन्ति औलूको नाम ग्रामः । तदस्मिन्नस्तीत्यण् । तत्र भव औलूकीयः । प्रस्थोत्तरेत्यादिना प्राप्तमणं छो बाधते । यस्तु कोपधादण् इत्यण् स जनपदवुञोऽपवादः । तस्यापि वृद्धादकेकान्तेत्यत्र कोपधग्रहणं सौसुकाद्यर्थमिति । विहितश्छो बाधक इति स्थितिः ।

भवतष्ठक्छसौ ॥ ११५ ॥

वृद्धाद् भवत एतौ स्तः । भावत्कः । भवदीयः । प्रक्रि-

यालाघवाय कगेव क्रियतामिति चेत् न । भावत्कीति ङीबर्थं ठक्करणात् । छसः सकारः सितिचेति पदसंज्ञार्थः । अत एव नायं शकारादिः । तथाहि सति सित्वं व्यर्थं स्यात् । वृद्धादित्यनुवृत्तेः शत्रन्तादणेव । भावतः ।

काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥

इकार उच्चारणार्थः । ञकार एवोभयत्राप्यनुबन्धः । तस्य विपर्यासस्तु स्त्रीप्रत्यये विशेषार्थः । काशिकी । काशिका । चैदिकी । चैदिका । वृद्धादित्यनुवर्त्तते । तेन वाहीकग्रामवाचिनो देवदत्तशब्दस्यावृद्धत्वाठ्ञिठौ न किं त्वणेव । दैवदत्तः । एङ् प्राचामित्यत्र हि प्राग्ग्रहणं विकल्पार्थमिति कुणिमते भाष्यमते च व्यवस्थितविभाषाश्रयणादप्राग्देशवाचिनो न वृद्धसंज्ञेत्युक्तम् । प्राचामिति देशविशेषणतया व्याचक्षणस्य जयादित्यस्य तु मते क्षमेचावृद्धत्वं प्राग्देशवाचिनस्तु मतद्वयेपि वृद्धत्वात् ठञ्ञिठौ स्त एव । दैवदत्तिकी । दैवदत्तिका । कथं तर्हि वा नामधेयस्येति वार्त्तिके देवदत्तीया इति छो भाष्यादावुदाहृत इति चेत् । अत्र वृत्तिकारः । व्यवस्थितविभाषाश्रयणाच्छे कर्त्तव्ये एव वृद्धसंज्ञा न तु ठञ्ञिठोरिति । इह कुमारयुवराजादयः पठ्यन्ते तेषामवृद्धत्वेऽपि पाठसामर्थ्याट्ठञ्ञिठौ । आपदादिपूर्वपदात्कालान्तादित्यन्तर्गणसूत्रम् । आपदादिराकृतिगणः । आपत्कालिकी । आपत्कालिका । आर्धकालिकी । आर्द्धकालिका ।

वाहीकग्रामेभ्यश्च ॥ ११७ ॥

वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः । छस्यापवादः । ये तु अव्ययतीरत्यादिना छस्य बाध्या उक्तास्ते कै-

स्मृतिकन्यायेन बाध्यन्ते । तथाहि । आरान्नाम वाहीकग्रामः । आरात्की । आरात्की । आरात्का । इसुसुक्तान्तात्कः । तथा कास्तीरं नाम वाहीकग्रामः । कास्तीरिकी । कास्तीरिका । दशरूप्यन्नाम वाहीकग्रामः । धन्वयोपधादिति वुञ् ठञ्ञिठौ बाधते । दाशरूप्यकः । तथा शकलानि सन्त्यस्मिन् शाकलं नाम उदीच्यग्रामान्तर्भूतो वाहीकग्रामः ततष्ठञ्ञिठावेव । शाकलिका । अत्रत्यभाष्यबलादेव प्राच्योदीच्यभिन्नत्वं वाहीकत्वमिति विवरणमुपेक्ष्यम् । किन्तु सिन्धुनदषष्ठानां शतद्रादिपञ्चनदीनां मध्यदेशविशेष एव वाहीक इत्युपपादितमेङ् प्राचामिति सूत्रे । प्रकृतमनुसरामः । सौसुकं नाम वाहीकग्रामः । प्रस्थोत्तरपदेत्यादिना प्राप्तं कोपधलक्षणमणञ्छो बाधते । परत्वात् । तमप्यपवादत्वात् ठञ्ञिठौ । वृद्धादकेकान्तेति सूत्रे कोपधग्रहणं कर्त्तव्यं सौसुकाद्यर्थमिति वक्ष्यमाणश्छस्तु अपवादत्वात्तावपि बाधत इति । सौसुकीयः ।

## विभाषोशीनरेषु ॥ ११८ ॥

उशीनरेषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनीयः ।

## ओर्देशे ठञ् ॥ ११९ ॥

वृद्धादिति निवृत्तम् । उत्तरसूत्रे पुनर्वृद्धग्रहणात् । उवर्णान्ताद्देशवाचिनः ठञ् । निषादकर्षू । नैषादकर्षुकः । केण इति ह्रस्वः । देशे किम् । पटोश्छात्राः पाटवाः । ञिठं व्यावर्त्तयितुं ठञ्ग्रहणम् । वृद्धाच्छं परत्वाद् बाधते । दाक्षिकर्षुकः ।

## वृद्धात् प्राचाम् ॥ १२० ॥

प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आढकजम्बुकः । शाकजम्बुकः । नेह मल्लवास्तु माल्लवास्तवः ।

धन्वयोपधाद् वुञ् ॥ १२१ ॥

धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद् वुञ् स्यात् । धन्वेति विशेषग्रहणं नतु स्वरूपपर्यायग्रहणम् । वृद्धत्वासम्भवात् । पारेधन्वकः । धन्वनः पारमिति विग्रहे पारे मध्ये षष्ठ्या वेत्यव्ययीभावः । अनश्चेति टच् समासान्तः वुञि यस्येति लोपः । समानौ मरुधन्वानौ इत्यमरः । नपुंसकोऽपि धन्वशब्दोऽस्ति । आष्टकं नाम धान्वेति ह्रस्वपाठात् । तेन विग्रहे नपुंसकादन्यतरस्यामिति टजभावपक्षे वुञि नस्तद्धित इति टिलोपः । ऐरावतं धन्व । ऐरावतकः । योपध । सांकाश्यकः । काम्पिल्यकः । साङ्काश्यकाम्पिल्यौ वुञ्छणादिसूत्रेण ण्यान्तौ ।

प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

एतदन्ताद् वृद्धाद्देशवाचिनो वुञ् । छापवादः । वृद्धादित्यनुवृत्त्यैव स्वरूपग्रहणे निरस्ते पूर्वसूत्र इव विशेषग्रहणं मा भूत् इत्यन्तग्रहणम् । मालाप्रस्थकः । नान्दीपुरं नाम वाहीकेषु ग्रामः तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ वुञप्येवम् । तत्रापवादविप्रतिषेधाद् वुञेव । नान्दीपुरकः । एवं पातनप्रस्थकः । कौजीवहकः । पुरान्तग्रहणमप्रागर्थं प्राग्देशे तत्रैणैव सिद्धम् । रोपधत्वात् ।

रोपधतोः प्राचाम ॥ १२३ ॥

रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धात् वुञ् स्यात्

छस्यापवादः । पाटलिपुत्रकः । ऐकचक्रः । एकचक्रा नाम प्राग्देशनगरी । तत्र एङ् प्राचां देश इति वृद्धसंज्ञा । ईत इति दीर्घग्रहणं व्याख्यानात् । ह्रस्वान्तस्य प्राग्देशवाचिनो ऽसम्भवाच्च । ककन्देन निर्वृत्ता नगरी काकन्दी स्त्रीषु सौवीरसाल्वप्राक्षिवत्यञ् । तत्र भवः काकन्दकः । तपरकरणं विस्पष्टार्थम् ।

जनपदतदवध्योश्च ॥ १२४ ॥

जनपदवाचिनस्तदवधिवाचिनश्च वृद्धात् प्रातिपदिकाद् वुञ् स्यात् । आदर्शकः । तदवधिरिति कर्मधारयः । नतु षष्ठीतत्पुरुषः । तथाहि सति मौञ्जी नाम वाहीकानामवधिभूतो ग्रामः तत्र भवो मौञ्जीय इत्यत्रापि स्यात् । अवधित्वं च सन्निधानाज्जनपदं प्रत्येव । किमर्थं तर्हि तदवधिग्रहणमिति चेत् । उत्तरसूत्रे बाधकबाधनार्थमिति गृहाण । तथाहि । गर्त्तोत्तरपदाच्छो भवतीत्यस्यावकाशः । वृकगर्त्तीयः । जनपदवुञो ऽवकाशः । आङ्गकः । त्रिगर्त्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात् । वुञेव त्विष्यते । त्रैगर्त्तक इति । तथा च । गर्त्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् विप्रतिषेधेनेति न कर्त्तव्यं भवति ।

अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

अवृद्धाद्वृद्धाच्च जनपदावधिवाचिनो बहुवचनविषयात् प्रातिपदिकाद् वुञ् स्यात् । अणूछयोरपवादः । अवृद्धादणो वृद्धाच्छस्य प्राप्तेः । अवृद्धाज्जनपदात् । अङ्गाः । वङ्गाः । कालिङ्गाः । आङ्गकः । वाङ्गकः । कालिङ्गकः । सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येत्युक्तं येनविधिरिति सूत्रे । सुपाञ्चालकः । अवृद्धाज्जनपदावधेः अजमीढाः । अजक्रन्दाः । आजमीढकः । आजक्रन्दकः । वृद्धाज्जन-

पदात्। दार्वकः। वृद्धाज्जनपदात्रधेः । कालञ्जराः। वैकुलिशाः। कालिञ्जरकः । वैकुलिशकः। विषयग्रहणं किम्। एकशेषेण बहुत्वे मा भूत् । वर्त्तनी च२वर्तन्यः तासु भवो वार्त्तनः। ननु वृद्धात्पूर्वेण सिद्धे तत्किमपिग्रहणेन । अत्राहुः। तक्रकौण्डिन्य-न्यायेन बाधा मा भूत्। तथाहि। पूर्वसूत्रेण जनपदसामान्ये वृद्धात् वुञुक्तः। यथा ब्राह्मणसामान्ये दधि। इह तु बहुवचन-विषये विशेषेऽवृद्धाद् वुञ् । यथा कौण्डिन्ये तक्रम्। ततश्च बहुवचनान्तादपि वृद्धाद् वुञि प्राप्ते आरभ्यमाणेनावृद्धाद् वुञा वृद्धाद् वुञो बाधो मा भूदिति तस्य समुच्चयार्थोऽपिशब्दः। न-न्वेवं बहुवचनविषयादित्येवास्तु । अवृद्धार्थोयं योगो भविष्य-ति । सत्यम्। वृद्धाधिकारविच्छेदार्थमवृद्धादपीत्युक्तमित्याहुः।

कच्छाग्निवक्त्रवर्त्तोत्तरपदात् ॥ १२६ ॥

कच्छाद्युत्तरपदाद्देशवाचिनो वृद्धादवृद्धाच्च वुञ्। छाणोरपवा-दः। दारुकच्छकः। पैप्पलीकच्छकः। काण्डाग्नकः। वैभुजा-ग्नकः। तैदुवक्त्रकः। सैन्धुवक्त्रकः। बाहुवर्त्तकः। वा-क्रवर्त्तकः।

धूमादिभ्यश्च ॥ १२७ ॥

एभ्यो देशवाचिभ्यो वुञ् स्यात्। धौमकः। पाथेयशब्दोऽत्र पठ्यते तस्य योपधत्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं व-चनम्। तथा विदेहानर्त्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्त्तकम्। कुलात् सौवीरेष्विति पठ्यते। कौलकः। सौवीरश्चेत्। कौलमन्यत्र। समुद्रान्नावि मनुष्ये च। सामुद्रिका नौः। सामुद्रको मनुष्यः। नेह। सामुद्रस्तरङ्गः। तीर्थे। तैर्थकः।

नगरात्कुत्सनप्रावीण्ययोः ॥ १२८ ॥

नगराद् वुञ् कुत्सने प्रावीण्ये च गम्यमाने । प्रत्ययार्थविशेषणं चेदम् । कुत्सिते प्रवीणे च जातादौ प्रत्ययार्थे इति यावत् । नागरकश्चौरः शिल्पी वा । एतयोः किम् । नागरा ब्राह्मणाः । अञ् । न च कत्र्यादिषु नगरशब्दस्य पाठात् ढकञ् शङ्क्यः । तत्र माहिष्मतीसाहचर्यात् संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणात् । तत्र तु नागरेयकमिति भवत्येव ।

अरण्यान्मनुष्ये ॥ १२९ ॥

वुञ् । अरण्याणो वक्तव्य इत्यौपसंख्यानिकस्य णस्यापवादः । अत्र भाष्यम् । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । आरण्यकः पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा । वा गोमयेष्विति वक्तव्यम् । आरण्यका आरण्या वा गोमयाः ।

विभाषा कुरुयुगन्धराभ्याम् ॥ १३० ॥

आभ्यां वा वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः । युगन्धरार्थं विभाषाग्रहणम् । कुरुशब्दस्य कच्छादिपाठादेवाणः पक्षे सिद्धत्वात् । अवृद्धादपीति प्राप्तेऽपि जनपदलक्षणो वुञ् अणा मा बाधीति स एव परं विधेयः । मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितमिति । यथा एतदर्थमेव हि कच्छादिषु कुरुशब्दः पठ्यते । अन्यथाऽनयैव विभाषया वुञणोः सिद्धौ किं तेनेति हरदत्तः । यत्तु वृत्तावुक्तं जनपदशब्दावेतौ ताभ्यामवृद्धादपीति नित्ये वुञि प्राप्ते विकल्पोऽयमिति तत्प्रथमप्राप्त्यभिप्रायकम् ।

मद्रवृज्योः कन् ॥ १३१ ॥

आभ्यां कन् । जनपदवुञोऽपवादः । मद्रेषु जातः । मद्रकः । वृजिकः ।

कोपधादण् ॥ १३२ ॥

जनपदवुञोऽपवादः । ऋषिकेषु जात आर्षिकः । माहिषिकः । इह देश इत्यनुवर्त्तते वृत्तौ तच्चोत्तरार्थं न त्वदेशनिवृत्त्यर्थम् । तत्र हि प्राग्दीव्यत इत्यण् भवत्येव । प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणस्याञो बाधनार्थम् । स्यादेतत् । इहाणुग्रहणं मास्तु । कोपधादित्युक्ते आरम्भसामर्थ्याद् यो विहितो न च प्राप्नोति स एव प्रतिप्रसोष्यते । मैवम् । इक्ष्वाकुशब्दादोर्देशे ठञ् प्राप्तः तस्मिन् जनपदवुञा बाधिते यद्यणुग्रहणं न क्रियते सतष्ठञेव स्यात् । सिद्धान्ते त्वणेव सिध्यति । ऐक्ष्वाकः । दाण्डिनायनादिसूत्रेण टिलोपः ।

कच्छादिभ्यश्च ॥ १३३ ॥

एभ्यो देशवाचिभ्योऽण् स्यात् । वुञादेरपवादः । काच्छः । सैन्धवः । कच्छशब्दो न बहुवचनविषयः तस्य मनुष्यतत्स्थयोर्वुञर्थः पाठः । विजापकशब्दः पठ्यते तस्य कोपधत्वादेवाणि सिद्धे ग्रहणमुत्तरार्थम् । कच्छ सिन्धु वहुडव वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अणु खण्ड द्वीप अनूप अजवाह विजापक कुलूत कच्छादिः ।

मनुष्यतत्स्थयोर्वुञ् ॥ १३४ ॥

कच्छादिभ्य इत्येव । अणोऽपवादः । कच्छे जातादिः काच्छको मनुष्यः । काच्छकं हसितं जल्पितम् । काच्छिका चूडा । मनु-

ष्यतत्स्थयोरिति किम् । काच्छो गौः । सैन्धवः । वार्णवः ॥

अपदातौ साल्वात् ॥ १३५ ॥

साल्वशब्दस्य कच्छादिपाठात् पूर्वेण वुञि सिद्धे नियमार्थं सूत्रम् । अपदातावेवेति । नेह । साल्वः पदातिर्व्रजति ।

गोयवाग्वोश्च ॥ १३६ ॥

साल्वाद् वुञ् स्यात् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ।

गर्त्तोत्तरपदाच्छः ॥ १३७ ॥

देश इत्येव । अणोऽपवादः । वाहीकग्रामलक्षणौ तु ठञ्ञिठौ परत्वादयं बाधते । वृकगर्तीयम् । शृगालगर्तीयम् । श्वाविद्गर्त्तीयम् । उपरपदग्रहणं वहुच्पूर्वनिरासार्थम् । त्रैगर्त्तक इत्यत्र तु वुञेव भवति । तदवधिग्रहणादित्युक्तम् ।

गहादिभ्यश्च ॥ १३८ ॥

एभ्यश्छः स्यात् । माहिकप्रस्थशब्दात्प्रस्थपुरवहान्ताच्चेति वुञि प्राप्ते वाल्मीकिप्रभृतिभ्य इञश्चेत्यणि प्राप्ते शेषेभ्य औत्सर्गिकेऽणि प्राप्तेऽयमारम्भः । देशाधिकारेऽपि संनियोगेन मध्यममापद्यते । मध्यमीयः । चरणे तु प्रत्ययार्थेऽण् । माध्यमाः । तदेतद्विशेषे एव स्मर्यते । पृथिवीमध्यस्य मध्यमभावश्चरणसम्बन्धेन निवासलक्षणोऽणिति । पृथिवीमध्यवाचिन एव मध्यशब्दस्यादेशो न तु मध्यान्तरवाचिनः । चरणसम्बन्धेन योऽण् स निवासलक्षणो बोध्यः । सोऽस्य निवास इत्यत्रैवार्थे भवति नान्यस्मिन्नित्यर्थः । तथा च पृथिवीमध्ये जात एव मध्यमीयः न त्वन्यः । माध्यमास्तु पृथि-

वीमध्यनिवासिन एव चरणा न त्वन्येऽपि तेन पृथिवीमध्यादागताश्चरणा इत्यर्थे मध्यमीया इत्येव भवति । मुखपार्श्वतसोर्लोपश्च । मुखतीयम् । पार्श्वतीयम् । आद्यादित्वात्तसिः । अलोन्त्यस्येति सकारलोपे कृते यस्येतिचेति अकारलोपः । अव्ययानां भमात्रे टिलोप इत्यस्यानित्यतां ज्ञापयितुं चेदम् । तेनारातीयः सिद्धः । कुग् जनस्य परस्य च । जनकीयम् । परकीयम् । देवस्य च । देवकीयम् । वेणुकादिभ्यश्छण् वक्तव्यः । वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् । प्रास्थकीयम् । आकृतिगणोऽयम् । तेन स्वशब्दात् स्वार्थकनन्ताच्छे स्वकीयम् । तथा च लुब्योगाप्रख्यानादित्यत्र नहि स्वकीयस्यैव प्रत्याख्यानमिति न्यासः । केवलस्वशब्दात् सौवम् । द्वारादीनाञ्चेति सूत्रे सौवं मुहूर्तम् । स्वीयमिति तु प्राक्क्रीताच्छः । चान्द्रास्तु स्वजनपरदेवराज्ञां कुक् चेति सूत्रयन्ति । तत्र राज्ञो नलोपे यत्नान्तरमन्वेषणीयम् । अन्तरशब्दाद्गहादित्वाच्छे नशब्देन समासे नान्तरीयकमिति । अविनाभूतमित्यर्थः ।

प्राचां कटादेः ॥ १३९ ॥

प्राग्देशवाचिनः कटादेश्छः । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् । राज्ञः क च । असम्भवादिह देशो न सम्बध्यते । वृद्धत्वाच्छे सिद्धे तत्सनियोगेन कादेशमात्रं विधीयते । राजकीयम् ।

वृद्धादकेकान्तखोपधात् ॥ १४० ॥

अक इक एतदन्तात् खोपधाच्च वृद्धाद्देशवाचिनश्छः । कोपधलक्षणस्याणो वाहीकग्रामलक्षणयोष्ठञ्ञिठोः रोपधेतोरिति वुञश्चापवादः । ब्राह्मणको नाम जनपदः यत्र ब्राह्मणा आ-

युधजीविनः । ब्राह्मणकोष्णिके संज्ञायामिति निपातनात्साधुः। तत्र जातो ब्राह्मणकीयः । शाल्मलिकीयः । आयोमुखीयम् । अत्र वार्त्तिकम् । अकेकान्तग्रहणे कोपधग्रहणं कर्त्तव्यं सौसुकाद्यर्थमिति । सूत्रे अकेकान्तग्रहणमपनीय कोपधादितिकर्त्तव्यं व्यापकत्वाल्लघुत्वाचेत्यर्थः । सौसुकीयम् । ऐन्द्रवेणुकीयम् ॥

कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४१ ॥

कथादिपञ्चकोत्तरपदादेशवाचिनो वृद्धाच्छः स्यात् । ठञ्ञिठादेरपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् ।

पर्वताच्च ॥ १४२ ॥

पर्वतीयः । कथं तर्हि तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूदिति कालिदासः । उच्यते पर्वतीयस्य राज्ञ इमे पार्वतीया इत्यर्थे तस्येदमित्यण् असरूपत्वाच्छैषिकादित्यादिना निषेधो न ।

विभाषाऽमनुष्ये ॥ १४३ ॥

मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् । पक्षेऽण् । पर्वतीयानि पार्वतानि वा फलानि । अमनुष्ये किम् । पर्वतीयो मनुष्यः । इह नित्यश्छः । अमनुष्यशब्द इह यौगिको गृह्यते न तु रक्षःपिशाचादौ रूढः । व्याख्यानात् ।

कृकणपर्णाद्भारद्वाजे ॥ १४४ ॥

भारद्वाजदेशवाचिभ्यां कृकणपर्णशब्दाभ्यां छः स्यात् । कृकणीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणम् । पार्णम् ।

इति श्रीशब्दकौस्तुभे चतुर्थाध्यायस्य द्वितीयेपादे द्वितीयमाह्निकम् । पादश्च द्वितीयः समाप्तः ॥

युष्मदस्मदोरन्यतरस्यां खञ् च ॥ १४५ ॥

इह योगविभागो बोध्यः । तेन यथासंख्यं न । युष्मदस्मदोरन्यतरस्याम् । आभ्यां छो वा । त्यदादीनि चेति वृद्धत्वान्नित्ये प्राप्ते विकल्पोऽयम् । पक्षे अण् । युष्माकमयं युष्मदीयः । यौष्माकः । अस्मदीयः । आस्माकः । ततः खञ्च । यौष्माकीणः । आस्माकीनः ॥

तस्मिन्नणि च युष्माकास्माकौ ॥ १४६ ॥

एतयोरेतावादेशौ स्तः खञि अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । खञणोः किम् । युष्मदीयः । अस्मदीयः । इहापि योगविभागो बोध्यः । तेनादेशयोः खञण्भ्यां यथासंख्यं न । तस्मिन् युष्माकास्माकौ । तस्मिन् खञीत्यर्थः । ततः अणि च । स्पष्टम् । यद्वा लाघवार्थं खञणोरिति वक्तव्ये तस्मिन्नणि चेति गुरुकरणं वाक्यभेदं सूचयति । तेनेष्टसिद्धिः ।

तवकममकावेकवचने ॥ १४७ ॥

एकार्थवाचिनी ये युष्मदस्मदी तयोस्तवकममकौ स्तः खञि अणि च । तावकीनः । तावकः । मामकीनः । मामकः । खञणोः किम् । त्वदीयः । मदीयः ।

अर्द्धाद्यत् ॥ १४८ ॥

अर्ध्यः । सपूर्वपदात् ठञ् वक्तव्यः । वल्यर्थं वस्तु बालेयं तस्यार्द्धमेकदेशः तत्र भवो वालेयार्धिकः ।

परावराधमोत्तमपूर्वाच्च ॥ १४९ ॥

एतत्पूर्वादर्धाद्यत् । परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । सपूर्वादित्यौपसंख्यानिकस्य ठञोऽपवादोऽयं यत् । ननु सूत्रे परादिभ्य इति पञ्चम्येवास्तु किं पूर्वग्रहणेन । सत्यम् । शब्दाधिक्यादर्थाधिक्यमिति न्यायेन पूर्वविप्रतिषेधसूचनार्थं ग्रहणम् । तेन दिक्शब्दाभ्यां पूर्वावराभ्यामर्द्धशब्देन सह समासे परावपि ठञ्यतौ बाधित्वा यदेव भवति । परार्ध्यम् । अवरार्ध्यम् ।

दिक्पूर्वपदाट्ठञ्च ॥ १५० ॥

दिक्पूर्वपदादर्धान्तात् ठञ् स्याच्चाद्यत् । पौर्वार्धिकम् । पूर्वार्ध्यम् । दाक्षिणार्धिकम् । दक्षिणार्ध्यम् ।

ग्रामजनपदैकदेशादञ्ठञौ ॥ १५१ ॥

ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः । पौर्वार्धिकाः । दाक्षिणार्द्धाः । दाक्षिणार्धिकाः । ग्रामस्य पूर्वस्मिन् अर्द्धे भवा इति तद्धितार्थे समासः । ततः प्रत्ययः । अर्द्धशब्दस्य नित्यसापेक्षत्वात्समासतद्धितवृत्तिनिर्वाहः । ठञ्ग्रहणं स्पष्टार्थम् । अञ् चेत्युक्ते हि यतोऽप्यनुकर्षः सम्भाव्येत ।

मध्यान्मः ॥ १५२ ॥

मध्यमम् । अत्र वृत्तिकारः । आदेश्च । अवोधसोर्लोपश्चेति पठित्वा । आदिमः । अवमः । अधम इत्युदाजहार । तत्रादिम इति रूपम् अग्रादिपश्चाड्डिमजितिवार्त्तिकेन सिद्धम् ।

## अ सांप्रतिके ॥ १५३ ॥

मध्यशब्दादकारप्रत्ययः स्यान्मस्यावादः साम्प्रतिकेऽर्थे। उत्कर्षापकर्षहीनो मध्यो वैयाकरणः। मध्यं दारु। नातिह्रस्वं नातिदीर्घमित्यर्थः। सम्प्रतीत्यव्ययं प्रज्ञादौ पठ्यते। तच्च न्याय्ये वर्त्तते। तथाच प्रयुज्यते। अनाप्तश्चतूरात्रोतिरिक्तः षड्रात्रः स वा एष सम्प्रति यज्ञो यत् पञ्चरात्र इति। न न्यूनो नातिरिक्तः सम इत्यर्थः। इदानीमित्यर्थे तु प्रसिद्धमेव। ततोऽण्। सांप्रतं सम्प्रतीति पर्यायौ ततो विनयादेराकृतिगणत्वात् स्वार्थे ठगिति न्यासकारः।

## द्वीपादनुसमुद्रं यञ् ॥ १५४ ॥

समुद्रं समया अनुसमुद्रम्। अनुर्यत्समयेत्यव्ययीभावः। सप्तम्यन्तश्चेदं द्वीपविशेषणं विद्यमान इति क्रियाद्वारकम्। समुद्रसमीपे यो द्वीपस्तद्विषयात् द्वीपशब्दाद्यत् स्यात्। कच्छाद्यणो ऽपवादो मनुष्यवुञश्च। द्वैप्यम्। अनुसमुद्रं किम्। द्वैपमन्यत्।

## कालाट्ठञ् ॥ १५५ ॥

कालविशेषार्थकेभ्यष्ठञ् स्यात्। वृद्धाच्छं परत्वाद्बाधते। मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्। स्वरूपस्य पर्यायाणां चेह न ग्रहणम्। ज्ञापकात्। तथाहि। सन्धिवेलात्रयोदशीप्रभृतिभ्योऽवृद्धेभ्योऽण् विधीयते तच्च ठञो बाधनार्थम्। अर्थग्रहणे च तेभ्यष्ठञः प्रसङ्गो न त्वन्यथा। गौणमुख्यन्यायो नेहाश्रीयते। सन्धिवेलादिसूत्रेऽनेन कालग्रहणेन नक्षत्राणां विशेषणात्। ननु पुष्यादिशब्दानां कालो मुख्योऽर्थः। लुबविशेष इति व्युत्पादनादिति चेत्। मैवम्। पुष्यादिसमीप-

स्थेन चन्द्रमसा योगाल्लक्षितलक्षणया हि काले वृत्तिः सैव लुप्-द्वारान्वाख्यायते पौषादिनिवृत्त्यर्थम् । न त्वेतावता कालो मुख्योऽर्थः अनन्यलभ्यस्यैव शब्दार्थत्वात् । तेन कदम्बपुष्पसाहचर्यात् कदम्बः पुष्पकालः । व्रीहिपलालसाहचर्याद्व्रीहिपलालः । तत्र भवं कादम्बपुष्पिकम् । व्रैहिपलालिकमिति सिद्धम् । कथं तर्हि शार्वरस्य तमसो निषिद्धय इति कुमारः । अनुदितौषसरागतेति भारविश्च । प्रमाद एवायमिति प्रामाणिकाः । कश्चित्तु येषां च विरोधः शाश्वतिक इति निर्देशेन क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्त्तत इति सामान्यतो ज्ञाप्यत इत्याश्रित्य समादधौ । अथ कथं कालिकी व्याप्तिः कालिकः सम्बन्ध इति । कालविशेषवाचिनां हि ग्रहणमिति वृत्तिन्यासपदमञ्जर्यादिषु स्थितम् । उच्यते । कालवाचित्वाविशेषादिहापि ठञ् । विशेष एव गृह्यत इत्यस्य मुनित्रयानुक्ततया निर्मूलत्वात् । सन्धिवेलादिभ्योऽणुविधानं हि विशेषग्रहणं ज्ञापकं न तु तन्मात्रग्रहणे । तथा च नस्ताद्धित इति सूत्रे सायंप्रातिकः पौनःपुनिक इति भाष्यं व्याचक्षाणः कैयट आह । यथा कथंचित् कालशब्दात् ठञिति । एतेनाकालिकेप्सेतिसूत्रेऽकालिकेति ह्रस्वपाठपक्षे कालाट्ठञिति कालिकमिति भट्टवार्त्तिकमपि व्याख्यातम् । वृत्तिमते तु कालात् कालशब्दाट्ठञिति । कालाद्यत् प्रकृष्टे ठञिति पाश्चमिकसूत्रेणेति भाव इति भङ्क्त्वा व्याख्येयं स्यात् । समानकालीनं प्राक्कालीनमित्यादयस्तु प्रयोगा अमुकः पुरतः परेद्युरित्यादिवन्निरूढा एवापभ्रंशाः । तत्र जात इत्यतः प्राक् कालाधिकारः ।

श्राद्धे शरदः ॥ १५६ ॥

ठञ् स्यादृत्वणोऽपवादः । श्राद्धमिति कर्मनामधेयम् ।

श्रद्धावान् पुरुषस्तु नेह गृह्यते । व्याख्यानात् रूढिर्योगमपहरतीति न्यायाच्च । शारदिकं श्राद्धं शारदमन्यत् ।

विभाषा रोगातपयोः ॥ १५७ ॥

शारादिकः शारदो वा रोग आतपो वा । एतयोः किम् । शारदं दधि ।

निशाप्रदोषाभ्यां च ॥ १५८ ॥

चात् ठञ् । कालाट्ठञिति नित्ये प्राप्ते । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ।

श्वसस्तुट् च ॥ १५९ ॥

श्वःशब्दाट्ठञ् वा स्यात् तस्य तुडागमश्च । ऐषमोह्यःश्वस इत्यादिना त्यबपि विकल्पितः । ट्युट्युलौ । शौवस्तिकः । द्वारादित्वान्न वृद्धिः ऐजागमश्च । श्वस्त्यः । श्वस्तनम् । स्यादेतत् । तुटः प्रत्ययभक्ततया ठस्यादित्वाभावादादेशो दुर्लभः कर्मठ इत्यठचो यथा । न च परत्वादिकः आङ्गतया तस्य वहिरङ्गत्वात् । तुटः प्रत्ययसन्नियोगशिष्टतयान्तरङ्गत्वात् । न च सूत्रभङ्गेन तुक् सुकरः इसुसुक्तान्तादिति कादेशप्रसङ्गात् । मैवम् वुञ्छणादिसूत्रे बह्वचो मनुष्यनाम्नष्ठज्वेत्यत्र च ठचाश्रित्वेन इकादेशोऽन्तरङ्गेभ्योऽपि वलवानिति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्ते कृते इकादेशः स्यादिति किं ठचाश्रित्वेन । कृते त्विकादेशे प्रत्ययस्वरं बाधितुं चित्वं युज्यते ।

सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १६० ॥

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण्

स्यात् । ठञोऽपवादः । सन्धिवेला । सन्ध्या । तिष्यादृ भवादौ प्रत्ययः जातार्थे तु श्रविष्ठाफल्गुनीति लुक् स्यात् । सूर्यतिष्ये-त्यत्र तिष्यपुष्ययोर्नक्षत्राणीत्युक्तेर्यलोपः । सन्धिवेला सन्ध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत् । संवत्सरात् फलपर्वणोः । सांवत्सरं फलं पर्व वा । सांवत्सरिक-मन्यत् । अण्ग्रहणं छबाधनार्थम् । सन्धिवेलादिभ्यो यथावि-हितमितिह्युच्यमाने सन्धिवेलादिषु पठितात्पौर्णमासीशब्दात् वृद्धाच्छः स्यात् । वचनं तु ठञो बाधनार्थं स्यात् ।

प्रावृष एण्यः ॥ १६१ ॥

ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट् क्विशब्दे नहिवृती-त्यादिना दीर्घः । तत्र भवः प्रावृषेण्यः । जाते तु ठञ् वक्ष्यति । रषाभ्यामिति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणम् । किञ्च । प्रावृषेण्यमाचक्षाणः प्रावृषेण इत्यत्र णकारश्रवणार्थं तत् । ण्यन्तात् क्विप् । णिलोपाल्लोपयलोपाः ।

वर्षाभ्यष्ठक् ॥ १६२ ॥

ऋत्वणोऽपवादः । वर्षासु साधु वार्षिकं वासः । काला-त्साधुपुष्प्यत्पच्यमानेषु इति साध्वर्थे ठक् ।

छन्दसि ठञ् ॥ १६३ ॥

पूर्वसूत्रापवादः स्वरे भेदः । नभश्च नभस्यश्च वार्षिका-वृतू । तस्येदमर्थे ठञ् । ऋतुशब्दस्य मासे लक्षणा । वर्षावयव-भूताविमौ मासावित्यर्थः । नभ इति लिङ्गव्यत्ययात् क्लीवता । लोके तु पुंस्त्वमेव । नभः खं श्रावणो नभा इत्यमरः ।

वसन्ताच्च ॥ १६४ ॥

ठञ् स्याच्छन्दसि । मधुश्च माधवश्च वासन्तिकावृतू ।

हेमन्ताच्च ॥ १६५ ॥

छन्दसि ठञ् स्यात् । हैमन्तिकः । योगविभाग उत्तरार्थः ।

सर्वत्राण् च तलोपश्च ॥ १६६ ॥

हेमन्तादण् स्यात् तकारलोपश्च वेदलोकयोः । हैमनं वासः । नस्तद्धित इति टिलोपस्तु न भवति । तलोपस्य समुदायलोपत्वपक्षे अन्नितिप्रकृतिभावात् । अवयवत्वपक्षे तु यस्येतिलोपे तस्याभीयत्वेनासिद्धत्वात् स्थानिवत्वाद्वा । अण् चेति चकाराद्दत्वणपि । तत्र तकारलोपाभावाद्धैमन्तम् । वृत्तिकारास्तु सर्वत्र ग्रहणस्य पूर्वसूत्रेऽप्यनुकर्षाद्भाषायामपि हैमन्तिकमिति तृतीयं रूपमाहुः । तत्तु भाष्यविरुद्धम् । भाष्ये हीदं सूत्रं प्रत्याख्यातम् । तच्चेत्थम् । हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति । हेमन् हेमन्नागतीगातिकर्णौ । तस्मादेतौ हेमनशुष्यतः इत्यादिप्रयोगात् । तत्र भाषायां हेमन्हेमन्तशब्दाभ्यां त्वणि हैमनं हैमन्तमिति रूपद्वयम् । छन्दसि तु ठञा तृतीयं रूपम् । न च ठञाऽणो बाधः । छन्दसि सर्वविधीनां वैकल्पिकत्वादिति तस्य नियतविषयतां ज्ञापयितुं सूत्रमारेभे । अनभिधानादेवातिप्रसङ्गपरिहारं मत्वा प्रत्याख्यानम् ।

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ १६७॥

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ

स्तस्तयोस्तुद् च स च कृतादेशयोः घकालतनेषु अनद्यतन इत्यादिनिर्देशात् अन्तरङ्गत्त्वाद्धि प्रथमं तुटि भुज्युमृत्युरित्यादावित्र त्युशब्दस्य प्रत्ययतयाङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानो ऽनादेशो न स्यात् । तुगेव तु न कृतस्तस्य पूर्वान्ततया प्रातस्तनमित्यादौ विसर्जनीयासिद्धिप्रसङ्गात् । सायन्तनम् । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । सायमिति मान्तमव्ययम् । स्वरादिषु पाठात् । ततोऽव्ययत्वादेव सिद्धः प्रत्ययः । यस्तु स्यतेर्घञिसायशब्दो दिवसावसाने रूढः । तस्य प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते । अन्यत्र त्वकारान्त एव सायाह्नः । आह च संख्याविसायपूर्वस्याह्नस्येति । भारविश्च सायमण्डनमभितवरयन्त्य इति । इदं च वार्त्तिकमतम् । आह हि । सायचिरयोर्मान्तत्वं प्रत्ययसान्नियुक्तमिति । भाष्ये तु । सायंशब्दस्य पाठ इह सूत्रे प्रत्याख्यातः । घञन्तस्य सायशब्दस्य पाकादिशब्दवदकालवाचित्वात् । कथं तर्हि सायाह्नः सायमोऽह्ने मलोप इति वचनात् । तरे वा । सायतरे । सायन्तरे । वा सप्तम्याम् । साये सायम् । एवं च भाष्यमते सायमण्डनमित्यादयोऽपप्रयोगा एवेति बोध्यम् । प्राह्णेप्रगे इत्यनयोरेदन्तत्वं निपात्यते । प्राह्णः सोढोऽस्य प्राह्णेतन इत्याद्यर्थम् । तत्र हि सप्तमी नास्ति । जाताद्यर्थे तु घकालतनेष्वित्यलुकापि सिद्धम् । अत्र वार्त्तिकानि । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम् । चिरशब्दस्य सूत्रे उपादानात् ट्युट्युलावपि भवतः न तु किंयत्तद्बहुषु कृञो ऽज्विधानमित्यत्रेव सूत्रस्य बाधः । सायश्चिरमो मकारान्तत्वमिति वार्त्तिके चिरन्तनमितिभाष्योदाहरणात् । परुत् । पूर्वस्मिन्वर्षे । परारि पूर्वतरे वर्षे । प्रगस्य छन्दसि गलोप-

श्च । मन्त्रमात्मानम् । मन्त्रशब्दः पुराणवचन इति हरदत्तः । भाषायामप्यसौ पञ्चमे साधयिष्यते । एवं चास्य वचनस्य यथा न वैयर्थ्यं तथा तत्रैव वक्ष्यामः । अग्रादिपश्चाड्डिमच् । अग्रिमम् । पश्चिमम् । डित्वं शक्यमकर्त्तुम् । अन्ताच्च । अन्तिमम् ।

विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ १६८ ॥

आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च । पक्षे कालाट्ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । घकालतनेष्विरत्यलुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनं अपराह्णतनमित्येव । ठञा पौर्वाह्णिकम् । आपराह्णिकम् ॥

तत्र जातः ॥ १६९ ॥

अणादयो घादयश्च प्रकृताः तेषामर्थाः समर्थविभक्तयश्चेतः परं निर्दिश्यन्ते । सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि । ननु शेष इत्यस्य लक्षणतया चाक्षुषं रूपमित्यादाविव जातादिष्वप्यणादयः सिद्धाः । अधिकारतया च घादयः । तस्मादर्थास्तावन्न निर्देष्टव्याः समर्थविभक्तयोऽप्याक्षेपादेव लप्स्यन्ते । चाक्षुषं रूपमित्यत्र तृतीया यथा । अत एव नियमार्थत्वमपि न शङ्क्यम् । जातादिष्वेवेत्यादिनियमे चाक्षुषमित्याद्यसिद्धिप्रसङ्गात् । तत्रास्ते शेतेऽत्यादौ त्वनभिधानान्न भविष्यति अङ्गुल्या खनति वृक्षमूलादागत इत्यादौ यथा । अत्राहुः प्रावृषष्ठबित्यादीनपवादांस्तत्र तत्र विशेषे वक्तुं जाताद्यर्था अवश्यं वक्तव्यास्ते योगविभागेन विभक्तिविशेषसमभिव्याहारेण वोक्ताः स्पष्टत्वार्थम् । यानि तु निरपवादान्यर्थादेश-

नानि कृतलब्धक्रीतकुशला इत्यादीनि स्पष्टत्वार्थान्येवेति ।

प्रावृषष्ठप् ॥ १७० ॥

एण्यस्यापवादः । पित्वादनुदात्तः । प्रावृषि जातः प्रावृषिकः ।

संज्ञायां शरदो वुञ् ॥ १७१ ॥

ऋत्वणोऽपवादः । शारदकाः । दर्भविशेषाणां मुद्गविशेषाणां च । संज्ञायां किम् । शारदं सस्यम् । केचित्संज्ञायामित्येतत्कृतलब्धेत्येतत्पर्यन्तमनुवर्तयतीति वृत्तिकारः ।

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादू वुन् ॥ १७२ ॥

पूर्वाह्णकः । अपरान्हकः । विभाषा पूर्वाह्णापराह्णाभ्यामित्यस्यापवादः । आर्द्रकः । मूलकः । नक्षत्राणोऽपवादः । प्रदोषकः । निशाप्रदोषाभ्याञ्चेत्यस्यापवादः । अवस्करकः । औत्सर्गिकस्याणोऽपवादः । असंज्ञायां तु यथाप्राप्तं ठञादय एवेत्येके ।

पथः पन्थ च ॥ १७३ ॥

पथि जातः पन्थकः ।

अमावास्याया वा ॥ १७४ ॥

सन्धिवेलाद्यणोऽपवादः । अमावास्यकः । आमावास्यः । अमावस्यदन्यतरस्यामिति सूत्रेणामापूर्वाद्वसेर्ण्यति वृद्धौ पक्षे ह्रस्वो निपात्यते । तेन ह्रस्वपक्षे एकदेशविकृतस्यानन्यत्वादण्वुनौ स्त एव । आमावास्यः । अमावस्यकः । ये तु सन्धिवेलादिष्विह सूत्रे च ह्रस्वोपधमधीयते तेषां दीर्घोपधान्न स्यात् । विकृत्या प्रकृतेरग्रहणादिति न्यासकारः हरदत्तोऽप्येवम् । अकृतवृद्धेर्वृद्धिप्रकृतिभूतस्येदं ग्रहणमित्याश्रित्य ह्रस्वपाठोऽपि समर्थयितुं शक्यते ।

अ च ॥ १७५ ॥

अमावास्याशब्दादकारः प्रत्ययः स्यात् । अमावास्यः । अमावस्यः । पक्षेऽण्वुनावुक्तौ । तथा चामावास्यायां जाते षड् रूपाणि । सकारद्वित्वविकल्पात्तु द्वादशेत्यत्रधेयम् ।

सिन्ध्वपकराभ्यां कन् ॥ १७६ ॥

सिन्धुशब्दात् कच्छाद्यणि मनुष्यवुञि च प्राप्तेऽपकरशब्दात्तु औत्सर्गिकेऽणि प्राप्ते । सिन्धुकः । अपकरकः ।

अणञौ च ॥ १७७ ॥

क्रमात् स्तः । सैन्धवः । आपकरः ।

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ १७८ ॥

एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् । लुक्तद्धितलुकीति स्त्रीप्रत्ययनिवृत्तिः। श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । कृत्तिकापर्यायस्य बहुलाशब्दस्य समाहारद्वन्द्वे नपुंसकह्रस्वत्वेन सूत्रे निर्देशः न तु बह्वर्थादाननिमित्तकस्य बहुलशब्दस्य श्रविष्ठादिभिः साहचर्यात् । कथं तर्हि अव्ययात्त्यबिति सूत्रे शैषिकाणां विप्रतिषेधनिरूपणप्रस्तावे भाष्यं स्वातिः स्वावात इति । न च कृदिकारादिति ङीषन्तात् स्वातीशब्दाज्जातार्थे इदं रूपमस्त्विवति वाच्यम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । अत्र कैयटः । भवार्थेऽण् जाते तु श्रविष्ठेत्यादिना लुक् स्यादिति । संधिवेलादिसूत्रे हरदत्तोऽप्येवम् । माधवस्तु सूत्रे स्वातीतिष्येतिङीषन्तं पठन् जातार्थेऽप्यङीषन्तस्य सौवात इति रूपमिच्छति । एतच्चात सा-

तत्यगमने इत्यत्र धातुवृत्तौ स्पष्टम् । लुक्प्रकरणे चित्रारेव-
तीरोहिणीभ्यः स्त्रियामुपसंख्यानम् । चित्रायां जाता चित्रा ।
रेवती । रोहिणी । यद्यपि गौरादिषु रेवती नक्षत्रे रोहिणी न-
क्षत्र इति पठ्यते । तत्रेमौ नक्षत्रवाचिनौ । जातार्थवृत्तित्वा-
त् । तथा पिप्पल्यादेराकृतिगणत्वादाभ्यां ङीष् । प्रथमो-
त्पन्नस्तु लुक् तद्धितलुकीति लुप्यते । फल्गुन्यषाढाभ्यां टानौ
वक्तव्यौ । स्त्रियामित्येव । टो ङीवर्थः । नकारः स्वरार्थः ।
विधानसामर्थ्यादनयोर्न लुक् । फल्गुनी । अषाढा । श्रविष्ठा-
षाढाभ्यां छण् वक्तव्यः । स्त्रियामितीह नापेक्ष्यते । श्राविष्ठी-
यः । आषाढीयः ॥

स्थानान्तगोशालखरशालाच्च ॥ १७९ ॥

एभ्यो जातार्थस्य लुक् स्यात् । गोस्थाने जातो गोस्था-
नः । अपूर्वस्थानः । गोशालः । खरशालः । गोशालशब्द-
स्य विभाषासेनेति नपुंसकत्वे ह्रस्वत्वम् । तत्साहचर्यात् ख-
रशालेऽप्येवमेव न तु द्वन्द्वैकत्वप्रयुक्तम् । एकादेशस्य पूर्वं प्र-
त्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया वा स्त्रियामपि लुग्भवत्ये-
व । यद्यपि टाबन्तयोः पाठे एकदेशविकृतस्यानन्यत्वान्नपुंस-
काभ्यां लुक् सिद्धत्येव तथापि लाघवार्थं ह्रस्वपाठ इति हरदत्तः।

वत्सशालाभिजिदश्वयुक्शतभिषजो वा ॥ १८० ॥

एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातः
वत्सशालः । वात्सशालः । अभिजित् । आभिजितः ।
अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषजः ।
पक्षे शातभिषः । अण् ङिद्वा विधीयत इति ङित्वम् । एत-
च्च दृष्टं सामेत्यधिकारे उक्तम् । अभिजिन्नामकं हि मुहूर्त्तम-

प्यस्ति । अश्वयुक्शतभिषजोस्तु प्रपञ्चार्थं ग्रहणम् । इह वत्सशालेति ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम् ।

नक्षत्रेभ्यो बहुलम् ॥ १८१ ॥

नक्षत्रेभ्यः परस्य जाते प्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः । रौहिणः । चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानमित्येतत्तु स्त्रियां लुगेव यथा स्यादित्येतदर्थं न तु स्त्रियामेव लुगर्थम् । वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणादेव लुग्व्यवस्थायां सिद्धायां बहुलग्रहणं क्वचिदन्यदेवेत्यर्थम् । तेन टानौ वक्तव्यावित्यादि सिद्धम् ।

कृतलब्धक्रीतकुशलाः ॥ १८२ ॥

तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः । राष्ट्रियः । यद्यपि कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये तथापि पृथगुपादानं कृतत्वप्रकारकेऽपि बोधे शैषिकाः साधका इति बोधयितुम् । अत एव जाते लुग्भाजामपि कृते लुङ् नेत्यवधेयम् ।

प्रायभवः ॥ १८३ ॥

तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवतीति स्रौघ्नः । न च तत्र भव इत्यनेन गतार्थता भवप्रायभवयोर्लब्धक्रीतयोरिवाविशिष्टत्वविशिष्टत्वाभ्यां भेदात् ।

उपजानूपकर्णोपनीवेष्ठक् ॥ १८४ ॥

औपजानुकः । औपकर्णिकः । औपनीविकः । उपजान्वादयः सामीप्येऽव्ययीभावः । समाहारद्वन्द्वात्सौत्रपुलिङ्गनिर्देशः ।

सम्भूते ॥ १८५ ॥

तत्रेत्येव । स्रुघ्ने सम्भवति स्रौघ्नः । इदानीं स्रुघ्ने स-

म्भाव्यते तत्प्रमाणान्नातिरिच्यते वा यः सेनादिरर्थ स एवमुच्यते । सूत्रे तन्त्राद्याश्रयणादनवक्लृप्तिराधेयस्याधारात् परिमाणानतिरेकश्चेत्यर्थद्वयमपि विवक्षितम् ।

कोशाड्ढञ् ॥ १८६ ॥

कौशेयं वस्त्रम् । रूढीयम् । कोशे सम्भवस्तु सत्कार्यवादाश्रयणात् । मतान्तरे तु विकारप्रकरणे एण्या ढञित्यस्यानन्तरं कोशाच्चेति पाठ्यम् । तथा च वार्त्तिकम् । विकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति ।

कालात्साधुपुष्प्यत्पच्यमानेषु ॥ १८७ ॥

हेमन्ते साधुर्हैमन्तः प्रकारः । शैशिरमनुलेपनम् । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । ग्रैष्म्यः पाटलाः । शरदि पच्यन्ते शारदाः शालयः । ग्रैष्मा यवाः ।

उप्ते च ॥ १८८ ॥

कालविशेषार्थात् सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययाः स्युः । हेमन्ते उप्यन्ते हैमन्ता यवाः । ग्रैष्मा व्रीहयः । सूत्रे भूतकालो ऽतन्त्रः । योगविभाग उत्तरार्थः ।

आश्वयुज्या वुञ् ॥ १८९ ॥

उप्तेऽर्थे । ठञोऽपवादः । ञकारः स्वरार्थ उत्तरत्र वृद्ध्यर्थश्च । आश्वयुज्यामुप्ता आश्वयुजका माषाः ।

ग्रीष्मवसन्तादन्यतरस्याम् ॥ १९० ॥

आभ्यां वुञ् वा स्यादुप्ते । पक्षे ऋत्वण् । ग्रैष्मकं ग्रैष्मं वा सस्यम् । वासन्तकम् । वासन्तम् ।

देयमृणे ॥ १९१ ॥

कालादित्येव । मासे देयमृणं मासिकम् । ऋणे किम् । मासे देया भिक्षा ।

कलाप्यश्वत्थयवबुसाद् वुन् ॥ १९२ ॥

यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचारात् कलापी । तत्र देयमृणं कलापकम् । अश्वत्थस्य फलं अश्वत्थः फले लुक् । तद्युक्तः कालोऽश्वत्थः । यस्मिन् कालेऽश्वत्थाः फलन्ति तत्र देयमश्वत्थकम् । यस्मिन्यवबुसमुत्पद्यते तत्र देयं यवबुसकम् ।

ग्रीष्मावरसमाद् वुञ् ॥ १९३ ॥

ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् । समाशब्दो वर्षपर्यायः अवरा चासौ समा चेति कर्मधारयः । न च दिक्संख्ये संज्ञायामेवेति नियमः अवरशब्दस्यादिक्शब्दत्वात् । आगामिनां वत्सराणामाद्ये संवत्सरे देयमावरसमकम् । अतीते वत्सरे देयं यदद्यापि न दत्तं तदित्यन्ये ।

संवत्सराग्रहायणीभ्यां ठञ् च ॥ १९४ ॥

चाद् वुञ् । संवत्सरे देयमृणं सांवत्सरिकं सांवत्सरकम् । आग्रहायणिकं आग्रहायणकम् । सन्धिवेलादिषु संवत्सरात् फलपर्वणोरिति पठितम् । तत्र फले ऋणत्वेन विवक्षितेऽण् प्राप्तः । सोऽनेन ठञा बाध्यते । एतदर्थमेव हि ठञ्ग्रहणम् । अन्यथा वेत्येव ब्रूयात् ॥

व्याहरति मृगः ॥ १९५ ॥

कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे यथाविहितं

स्युः प्रत्ययाः यो व्याहरति स मृगश्चेत् । निशायां व्याहरति नैशो मृगः । नैशिकः । प्रादोषः । प्रादोषिकः । मृगः किम् । निशायां व्याहरत्युलूकः ॥

तदस्य सोढम् ॥ १९६ ॥

प्रथमान्तात् कालार्थात् सोढोपाधिकादस्येति षष्ठ्यर्थे प्रत्ययः स्यात् । अस्येति नेयं कर्त्तरि षष्ठी । न लोकेति निषेधात् । किन्तु कर्त्तुरेव शेषत्वविवक्षायां षष्ठी । सोढमभ्यस्तम् । कालस्य स्वरूपेणाभ्यासायोगात् तत्सहचरितक्रियावृत्तेरयं प्रत्ययः । निशासहचरितमध्ययनं निशा तत्सोढमस्य नैशः । नैशिकः ।

तत्र भवः ॥ १९७ ॥

कालादिति निवृत्तम् । कालसम्बद्धस्य तत्रेत्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य तदित्यस्य व्यावृत्तये तत्र ग्रहणमिति वाच्यम् । तदस्येति सूत्रस्येति सूत्रस्येत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्त्तते तथापीह सत्तार्थ एव गृह्यते । तत्र जात इति पृथग्ग्रहणात् । स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः ।

दिगादिभ्यो यत् ॥ १९८ ॥

दिश्यम् । वर्ग्यम् । दिश् । वर्ग । पूग । पक्ष । धाय्य । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुखा । जघन । मेष । यूथ । उदकात्संज्ञायाम् । न्याय । वंश । अनुवंश । वेश । काल । आकाश । दिगादिः । मुखजघनशब्दयोरिह पाठः शरीरावयवार्थः । सेनाया मुखे जघने च भवं मुख्यं जघन्यम् ।

शरीरावयवाच्च ॥ १९९ ॥

दन्त्यम् । कण्ठ्यम् ।

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ २०० ॥

दृतिश्चर्मविकारः शरीरावयवश्च । तत्र भवं दार्त्तेयम् । कुक्षिशब्दो धूमादिः ततो धूमादिभ्यश्चेति वुञि प्राप्तेऽनेन ढञ् । कौक्षेयम् । कालशेयम् । कलशस्तु त्रिषु द्वयोः । घटः कुटनिपावस्त्रीत्यमरः स्त्रियां कलशिः कलशी चेति तद्व्याख्यातारः । तालव्या अपि दन्त्याश्च । शंवशूकरपांशवः । कलशः शम्बलं चैव जिह्वायां रशना तथेति शब्दभेदः । तथा दण्डाहतं कालशेयमरिष्टमपि गोरस इत्यमरस्य व्याख्यावसरे सेचपात्रं कलशिः ।वस्तिर्नाभेरधस्तत्र भवं वास्तेयम् । अस्तिशब्दः प्रातिपदिकविभक्तिप्रतिरूपकनिपातसंज्ञम् । तच्च तिङन्तेन समानार्थं भिन्नार्थं च । आद्यं यथा । अस्तिक्षीरा गौः । द्वितीयं यथा । अस्तिमान् । धनवानित्यर्थः । तदिहाविशेषादुभयोर्ग्रहणम् । आस्तेयमिति न्यासकारहरदत्तौ । मतुब्विधौ भाष्यकैयटपर्यालोचनया तु नायं धनवाची किन्तु वृत्तौ धनकर्तृकां सत्तामाहेति लभ्यते । अत एवास्तिसामानाधिकारण्याभावान्मत्वर्थं तत्र यत्नः कृतः । आहेयम् ।

ग्रीवाभ्योऽण् च ॥ २०१ ॥

चात् ढञ् । शरीरावयवाच्चेति यतोऽपवादः । ग्रीवाशब्दो धमनीसङ्घे वर्त्तते । तत्रोद्भूतावयवसङ्घविवक्षायां बहुवचनान्तात्प्रत्यय इति सूचयितुं सूत्रे बहुवचनम् । तिरोहितावयवभेदविवक्षायां तु एकवचनान्तादप्यणढञौ स्त एव । ग्रैवेयम् । ग्रैवम् ॥

गम्भीराञ्ञ्यः ॥ २०२ ॥

गम्भीरे भवं गाम्भीर्यम् ।

अव्ययीभावाच्च ॥ २०३ ॥

परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । परिमुखादिभ्य एवेष्यते । नेह । औपकूलः । औपशालः । दिगादिगणानन्तरं परिमुखादिगणः पठ्यते । तत्सामर्थ्यादिह सूत्रे ऽव्ययीभावपदं तन्मात्रपरमिति निर्णीयते । नहि परिमुखादीनामष्टाध्याय्यां कार्यान्तरविहितमस्ति । परिमुखादिभ्य इत्येव तु न सूत्रितम् । बहुव्रीहितत्पुरुषयोरपि प्रसङ्गात् । अव्ययीभावग्रहणस्योत्तरत्रोपयोगाच्च । परिमुख । परिहनु । पर्योष्ठ । पर्युलूखल । परिसीर । अनुसीर । उपसीर । उपस्थल । उपकलाप । अनुतिल । अनुशीत । अनुभाव । अनुपूप । अनुवंश । इह ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततोऽपपरिबहिरञ्चवः पञ्चम्येति समासः । अथ सर्वतो भावस्ततोऽस्मादेव निपातनादव्ययीभावः । उपपूर्वेषु सामीप्ये । अनुपूर्वेष्वनुर्यत्समया । यस्य चायामः । पश्चादर्थे यदव्ययमिति च यथाभिधानसमासः । परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः । तथा च शाखृ व्याप्ताविति धातौ प्रतिशाखं भवं प्रातिशाख्यम् । अव्ययीभावाच्चेति भवार्थे ञ्य इति माधवः ।

अन्तःपूर्वपदाट्ठञ् ॥ २०४ ॥

अव्ययीभावादित्यनुवर्त्तते । वेश्मनि अन्तर्वेश्मम् । विभक्त्यर्थेऽव्ययीभावः । तत्र भवमान्तर्वेश्मिकम् । आन्तर्गणिकम् । अत्र श्लोकवार्त्तिकम् ।

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ चापि प्रत्ययौ ॥
मध्यमध्यन्दिनश्चास्मात् स्थाम्नो लुगजिनात्तथा ।
बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं चत्र इष्यते ॥

सामानिकः । सामानग्रामिकः । आत्मनि अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । अनश्चेति टच् समासान्तः । आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । अनुशतिकादित्वादुभयपदवृद्धिः । अध्यात्मादिराकृतिगणः । एवं च समानस्य तदादेरित्यादिरस्यैव प्रपञ्चः । ऊर्ध्वशब्देन समानार्थ ऊर्ध्वं शब्दो मान्तः । स च एतद्वृत्तिविषय एवेति वृत्तिमतम् । कैयटस्तु दम उत्तरपदे ठञ्संनियोगेनोर्ध्वशब्दस्य मान्तत्वं निपात्यत इत्याह । और्ध्वंदमिकः । देहश्चेति । ऊर्ध्वशब्दपूर्वादेव । मान्तत्वं तु नेह निपात्यते । और्ध्वदेहिकम् । ऐहलौकिकम् । पारलौकिकम् । एतयोरनुशतिकादित्वादुभयपदवृद्धिः । १ । मुखेत्यादिश्लोकार्धं गहादिठस्यैव प्रपञ्चः । उत्तरार्धेन तु मध्यादीयमण्मीयाः । मध्यीयः । माध्यमः । मध्यमीयः । ननु मण्मीययोरिह किं फलम् । गहादिषु मध्यमध्यमं चाण् चरण इत्यनेन मध्यममध्यमीययोः सिद्धत्वात् । सत्यम् । तत्र पृथिवीमध्यवाचिन एव ग्रहणमित्युक्तम् । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति यथा स्यात् । मध्यान्तरवाचिनो मा भूदिति । इह तु मध्यान्तरवाचिनोऽपि भवार्थे मीयप्रत्ययो विधीयते । तथा गहादिपाठेन पृथिवीमध्यं निवास एषामित्यस्मि-

भवार्थे माध्यमा इति सिद्धम् । चरणसम्बन्धेन निवासलक्षणोऽणित्युक्तत्वात् । इह तु मध्यान्तरवाचिनो भवार्थे मण्प्रत्ययो विधीयत इति शेषः ॥ २ ॥ मध्येत्यनुकार्यानुकरणयोरभेदविवक्षया विभक्तिर्न कृता । मध्यशब्दो मध्यमभावं लभते दिनञ् च प्रत्ययः । ञित्वादाद्युदात्तता । माध्यन्दिनं सवनं चारुपते । माध्यंदिनस्य सवनस्य दध्नः । स्थाम्न इति । स्थामन्शब्दान्तादित्यर्थः । एवमजिनान्तात् । उभयत्रापि भाष्यकारीयमुदाहरणं तदन्तविधौ प्रमाणम् । अश्वस्येव स्थाम बलं यस्येति बहुव्रीहिः । पृषोदरादित्वात्सस्य तः । ततो भवार्थे अकारः । दित्यादित्येतिसूत्रे स्थाम्नोऽकार इति वार्त्तिकात् तस्यानेन लुक् । अश्वत्थामा । सिंहाजिने भवः सिंहाजिनः । अणो लुक् । वाह्यो दैव्य इति श्लोकार्थे पञ्चजनाञ्ञ्यो विधीयते । गम्भीराञ्ञ्य इत्यत्र पञ्चजनादुपसंख्यानं कर्त्तव्यमिति फलितोऽर्थः । अन्यः सर्वोऽप्यनुवादः प्राग्दीव्यत इत्यत्र पठितेन जाताद्यर्थान्तरानुरोधादवश्यादर्त्तव्येन देवस्य यञञौ बहिषष्टिलोप इत्यनेन गम्भीराञ्ञ्य इति सूत्रेण च गतार्थत्वात् ।

ग्रामात्पर्यनुपूर्वात् ॥ २०५ ॥

ग्रामान्तादव्ययीभावाट्ठञ् स्यादणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ।

जिह्वामूलाङ्गुलेश्छः ॥ २०६ ॥

यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ।

वर्गान्ताच्च ॥ २०७ ॥

कवर्गीयम् ।

अशब्दे यत्खावन्यतरस्याम् ॥ २०८ ॥

पूर्वेण पक्षे छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः । अशब्दे किम् । कवर्गीयो वर्णः ।

कर्णललाटात्कनलङ्कारे ॥ २०९ ॥

यतोऽपवादः । कर्णिका । ललाटिका । अलङ्कारे किम् । कर्ण्यम् । ललाट्यम् ।

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥२१०॥

इति शब्दो वाक्यार्थं परामृशति तत्समीपे चकारस्तत्र भव इति वाक्यार्थमाक्षिपति । व्याख्यातव्यस्य ग्रन्थस्य नाम प्रतिपादकम् । तच्च शक्त्या लक्षणया वेत्यत्र नाग्रहः । तस्मात्षष्ठ्यन्ताद्व्याख्यानकरणे सप्तम्यन्तात्तु भवार्थे प्रत्ययाः स्युः । यद्यपि तस्येदं तत्र भव इति सूत्राभ्यां गतार्थता तथापि ठञादिकानपवादान्वक्तुमिमावर्थौ निर्दिष्टव्यावेव प्रसङ्गात्त्वणादिकं विधीयते । सुपां व्याख्यानः सौपो ग्रन्थः । तैङः । कार्त्तः । सुप्सु भवं सौपम् । व्याख्यातव्यनाम्नः किम् । पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रं हि तया व्याख्यायते इदक्सन्निवेशविशिष्टमिति । नन्विदं व्याख्यातव्यस्य नाम ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् । नामग्रहणस्य च प्रसिद्ध्युपसंग्रहार्थत्वात् ।

बह्वचोन्तोऽदात्ताट्ठञ् ॥ २११ ॥

अणोऽपवादः । षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः । बह्वचः किम् । द्व्यचष्ठकं वक्ष्यति । एकाच् प्रत्युदाहार्यः । सौपम् । तैङम् । अन्तोदात्तात्किम् । संहितायाः । सांहितम् । गति-

स्वरेणाद्युदात्तोऽयम् । अन्तग्रहणं स्पष्टार्थम् । उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात् । वर्णादनुदात्तादित्यत्र यथा ।

क्रतुयज्ञेभ्यश्च ॥ २१२ ॥

क्रतुयज्ञशब्दौ सोमसाध्येषु यागेषु प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्त्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम् । ग्रन्थानामेव व्याख्येयताया उक्तत्वात् । आग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः । असोमकेभ्यः पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । पाञ्चौदनिकः । अनन्तोदात्तार्थ आरम्भः । तथाहि राजसूयवाजपेयशब्दौ कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तौ । राज्ञा क्षत्रियेण सूयते राजा सोमः सूयतेऽत्रेति वा । राजसूयेति क्यप् तत एव निपातनात्समासः षष्ठीसमासो वा । पीयतेऽस्मिन्निति पेयः बाहुलकादधिकरणे यत् । वाजो यवागूभेदः । तस्य पेयो वाजपेयः । नन्वस्तूभयोरुदाहरणता अग्निष्टोमादीनां तु कथम् । ते ह्यन्तोदात्ताः तथा हि स्तुतिः स्तोमः अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः । परादिश्च परान्तश्चेत्यन्तोदात्तः पाकशब्दोऽल्पपर्यायः प्रशस्तपर्यायो वा । योमा पाकेन । तं पाकेन मनसेत्यादौ तथा दर्शनात् । पाकश्चासौ यज्ञश्चेति कर्मधारयः । नवैर्व्रीहिभिर्यजनं नवयज्ञः । आग्रयणम् । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । तस्माद् वृत्तिकारोक्तान्युदाहरणानि असङ्गतानीति चेत् । सत्यम् । अन्वार्थमस्मिन्नारब्धे सति अन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्य-

मिति वृत्तिकृत आशयो बोध्यः ॥

अध्यायेष्वेवर्षेः ॥ २१३ ॥

ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात् ऋषिश्चेह प्रवृत्तः सच भृग्वादिः । होत्राध्वर्युणा च प्रव्रियत इति प्रवर इति व्युत्पत्तेः । ग्रहवृदृनिश्चिगमश्चेत्यप् । उक्तञ्च । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । होताजमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युरिति । योगरूढश्चायं गोत्रसपिण्डादिशब्दवत् । गीयन्ते कीर्त्यन्ते येन वंश्यास्तद्गोत्रम् । समानः पिण्डोऽस्येति सपिण्ड इत्यपि हि योगोऽतिप्रसक्तः । ऋषिशब्दो यद्यप्यन्यत्र मन्त्रद्रष्टरि प्रसिद्धस्तथापीह लक्ष्यानुरोधादसमानार्षगोत्रजामित्यादौ दृष्टत्वाच्च प्रवरपर इति दिक् । वसिष्ठेन दृष्टो मन्त्रो वासिष्ठस्तस्य व्याख्यानस्तत्र भवो वासिष्ठिकोऽध्यायः । अध्यायेष्विति किम् । वासिष्ठी ऋक् । भवार्थेऽण् । एवकारः सर्वं वाक्यं सावधारणमिति ज्ञापयति । न्यायसिद्धं चेदम् । उद्देश्यतावच्छेदकावच्छदेन विधेयान्वयात् ।

पौरोडाशपुरोडाशात्ष्ठन् ॥ २१४ ॥

पुरोडाशसहचरितो मन्त्रः पुरोडाशः । स एव पौरोडाशोऽपि । आभ्यां ष्ठन् स्यात् । पौरोडाशिकः । पुरोडाशिकी । षित्वान्ङीष् । पुरो दाश्यते पुरोडाशः । दाशृ दाने कर्मणि घञ् । इहैव निपातनाद्दस्य डत्वम् ॥

छन्दसो यदणौ ॥ २१५ ॥

द्व्यज्लक्षणस्य ठकोऽपवादः । छन्दस्यः । छान्दसः । इहार्थयोः प्रत्ययाभ्यां यथासंख्यं न । अस्वरितत्वात् ।

दूव्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामा-
ख्याताट्ठक् ॥ २१६ ॥

द्व्यचः । ऐष्टिकः । पाशुकः । ऋत् । चातुर्होत्रिकः । ब्राह्मणिकः । आर्चिकः । प्राथमिकः आध्वरिकः । पौरश्चरणिकः । नामाख्यातग्रहणं संघातविगृहीतार्थमिति वार्त्तिकम् । आख्यातार्थं विगृहीतग्रहणं नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् । नामिकः । आख्यातिकः । नामाख्यातिकः ।

अणृगयनादिभ्यः ॥ २१७ ॥

एभ्योऽण् स्याद्भवे व्याख्याने च । ठञादेरपवादः । आर्गयनः । अण्ग्रहणं बाधकबाधनार्थम् । वास्तुविद्यः । इह ठञा मुक्ते छो मा भूत् । ऋगयन । अयनशब्दो भावसाधनोऽप्यभेदोपचाराद्ग्रन्थे वर्त्तते । अनो भावकर्मवचन इत्यन्तोदात्तः । पदव्याख्यान । इह मन्क्तिन्व्याख्यानेत्यन्तोदात्तः । छन्दोमान अयमृगयनवत् । मनेर्घञि तु थादिस्वरः । छन्दोभाषा । कृत्स्वरेणान्तोदात्तः । गुरोश्च हल इत्यकारे भाषाशब्दनिष्पत्तेः । छन्दोविचिति । मन्क्तिन्नित्यन्तोदात्तः । पुनरुक्तशब्दस्थाथादिस्वरेण । निरुक्तशब्दः संज्ञायामनाचितादीनामिति । निगमशब्दो गोचरादिसूत्रे घान्तो निपातितः । वास्तुविद्यानक्षत्रविद्याङ्गविद्येति समासस्वरेण । उत्पातोत्पादशब्दौ थाथादिस्वरेण । अशेः सरः वसेः संपूर्वाच्चिदिति संवत्सरशब्दोऽन्तोदात्तः । मुहूर्त्तनिमित्तशब्दौ प्रातिपदिकस्वरेण । उपनिपूर्वात्सदेः क्विप् उपनिषत् कृत्स्वरः । विद्यान्यायशिक्षाशब्देभ्यो द्व्यचष्ठक् प्राप्तः । व्याकरणशब्दाद् वृद्धाच्छः प्राप्तः तदिह यथासम्भवं ठञ्ठक्छा बाध्याः । इत्यृगयनादिः ।

तत आगतः ॥ २१८ ॥

स्रुघ्नादागतः स्रौघ्नः ।

ठगायस्थानेभ्यः ॥ २१९ ॥

एत्येनं स्वामी । स्वामिनमयमेतीति वा आयः स्वामिग्राह्यो भागः स यस्मिन्नुत्पद्यते तदायस्थानम् । तद्वाचिभ्यष्ठक् स्यादणोऽपवादः । शुल्कशालाया आगतः शौल्कशालिकः । वृद्धाच्छं परत्वाद्बाधते । आपणिकः । आकरिकः । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः ॥

शुण्डिकादिभ्योऽण् ॥ २२० ॥

आयस्थानठकश्छादीनां चापवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः । कृकणपर्णाद् भारद्वाज इति छे प्राप्ते । तीर्थशब्दस्य धूमादित्वादाञि प्राप्तेऽण् । तैर्थः । औदपानः । उदपानशब्दस्योत्सादित्वादञ् प्राप्तः । पुनरण्ग्रहणान्न भवति । यथाप्राप्तविधाने हि आयस्थानठक् मा भूत् । अञ् तु स्यादेव । तदिह ठक्छवुञञो बाध्याः । स्थण्डिल उपल भूमि तृण पर्ण शुण्डिकादिः ।

विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ २२१ ॥

विद्यायोनिकृतः सम्बन्धो येषां तेभ्यो वुञ् स्यादणोऽपवादः । छं तु परत्वाद् बाधते । उपाध्यायादागत औपाध्यायकः । शैष्यकः । आचार्यकः । मातामहकः । पैतामहकः । मातुलकः ।

ऋतष्ठञ् ॥ २२२ ॥

वुञोऽपवादः । विद्यायोनिसम्बन्धेभ्य इत्येव । हौतृक-

म् । मातृकम् । भ्रातृकम् । उष्कञिति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः । पौतृकी त्रियेत्यत्र ङीबर्थं ठञिति तु तत्त्वम् । कञ्ग्रहणेन सिद्धमिति चेत् तर्हि यादृशीत्यादि न स्यात् । तदनुबन्धकग्रहणेऽतथाभूताग्रहणात् ।

पितुर्यच्च ॥ २२३ ॥

चाट्ठञ् । रीङ् ऋतः । यस्येतिलोपः । पित्र्यम् । पैतृकम् ।

गोत्रादङ्कवत् ॥ २२४ ॥

लौकिकं गोत्रमित्युक्तम् । अपत्यप्रत्ययान्तादङ्कवत्प्रत्ययाः स्युः अङ्के दृष्टस्य सर्वस्यायमतिदेशो न तु साक्षाद्विहितस्येत्याग्रहः । तेन गोत्रचरणाद् वुञिति वुञपि लभ्यते । स हि तस्येदमिति सामान्येन विधीयमानोऽपि अञ्यञिञन्तादन्यत्राङ्केऽपि दृष्टः । वतिः सर्वसादृश्यार्थः । कालेभ्यो भववच्चरणेभ्यो धर्मवदिति यथा । विदेभ्य आगतं वैदम् । गार्गम् । दाक्षम् । सङ्घाङ्केत्युक्तेरञाद्यन्तादिहाप्यण् । औपगवेभ्य आगतमौपगवकम् । गोत्रचरणादिति वुञ् ।

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ २२५ ॥

मनुष्यग्रहणमहेत्वर्थम् । हेतुभ्यस्तावत् समादागतं समरूप्यम् । समीयम् । विषमरूप्यम् । विषमीयम् । गहादित्वाच्छः । विभाषात्र विभाषेति योगविभागादगुणवचनादपि पञ्चमी । योगविभागे च व्याख्यानमेव शरणम् । बाहुलकं प्रकृतेस्तनुदृष्टेरिति लिङ्गमप्यस्ति । ननु तत आगत इत्यधिकारे हेतुमनुष्येभ्य इति निर्देश एव लिङ्गमस्त्विति चेन्न । जाड्यादागत इत्यादिगुणपरतयाऽप्यस्य गतार्थत्वात् । मनुष्येभ्यः । देवदत्तरूप्यम् । दैवदत्तम् । बहुवचनं स्वरूपविधिनिरासार्थम् ।

मयट् च ॥ २२६ ॥

योगविभागो यथासंख्यनिरासार्थः । सममयम् । विषममयम् । देवदत्तमयम् । टकारः स्त्रियां ङीबर्थः ।

प्रभवति ॥ २२७ ॥

तत इत्येव । हिमवतः प्रभवति हैमवती गङ्गा । दारदी सिन्धुः । प्रभवति प्रकाशते तत्र प्रथमं दृश्यत इत्यर्थः । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते । तत्र जात इत्यतो भेदेन निर्देशात् ।

विदूराञ्ञ्यः ॥ २२८ ॥

अणोऽपवादः । विदूरात्प्रभवति वैदूर्यो मणिः । दन्त्यमध्योऽयं शाद्वलवत् न तु नड्वलवन्मूर्धन्यमध्यः । स्यादेतत् । इह नार्थः सङ्गच्छते । बालवायाद्धि असौ प्रभवति विदूरे तु संस्क्रियते । सत्यम् । अत एव समाहितं भाष्ये ।

बालवायो विदूरं च प्रकृत्यन्तरमेव वा ।

न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥ दिति ।

अस्यार्थः । बालवायशब्दः प्रत्ययं लभते विदूरादेशं च । सूत्रे पठितेनादेशेनानुरूपस्य स्थानिन आक्षेपात् । यथा पद्न इत्यादौ । अत एव शिवादिषु पठिताभ्यां विश्रवणरवणाभ्यामनुरूपो विश्रवाः स्थानितयाऽऽक्षिप्यत इत्युक्तम् । प्रकृत्यन्तरमेव वा । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः । न वा इति । वैशब्दोऽक्षमां द्योतयति । तत्र पर्वतेऽयं शब्दो न प्रसिद्ध इति चेज्जित्वरीवद्व्यवहरेत् । नियतपुरुषापेक्षोऽपि हि व्यवहारो दृश्यते । यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति । एवं वैयाकरणा एव अ-

द्रिं विदूर इति । एतद्भाष्यं दृष्ट्वेदानीं काव्येष्वपि तथा व्यवहारः । तथा च श्रीहर्षः । तथा विहराद्रिरहरतांगमीति ।

तद्गच्छति पथिदूतयोः ॥ २२९ ॥

द्वितीयान्ताद् गच्छतीत्यर्थे प्रत्ययः स्यात् स चेद् गन्ता पन्था दूतो वा । स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा । साध्वसिश्छिनत्ति । काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्त्ता ।

अभिनिष्क्रामति द्वारम् ॥ २३० ॥

तदित्येव । स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् । स्रौघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः । पूर्ववत्करणस्य कर्तृत्वे प्रत्ययः ।

अधिकृत्य कृते ग्रन्थे ॥ २३१ ॥

तदित्येव । अधिकृत्येत्येतदपेक्षया च द्वितीया । शारीरक आत्मा तमधिकृत्य कृतो ग्रन्थः शारीरकीयः । चतुर्लक्षणीसूत्रसंदर्भः । वृद्धाच्छः । वेदान्तग्रन्थेषु तु शारीरकमिति प्रचुरो व्यवहारः । स चौपचारिकः । न तु शैषिकप्रत्ययान्तः । अवृद्धादण् । यथा ययातिमधिकृत्य कृतो ग्रन्थः यायातः । अत्र वार्त्तिकम् । लुबाख्यायिकाभ्यो बहुलमिति तादर्थ्ये एषा चतुर्थी आख्यायिका नाम गद्यरूपोऽयं ग्रन्थविशेषः । अत एवाख्यानाख्यायिकयोस्तत्र तत्र भेदेनोपादानम् । आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुबित्यर्थः । वासवदत्ता । सुमनोत्तरा । क्वचिन्न । भैमरथी । अभेदोपचारेण गतार्थत्वान्नेदं वार्त्तिकमावश्यकम् ।

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥२३२॥

शिशूनां क्रन्दनं शिशुक्रन्दः तमधिकृत्य कृतो ग्रन्थः । शिशुक्रन्दीयः । यमस्य सभा यमसभम् । यमसभीयः । द्वन्द्वात् । अग्निकाश्यपीयः । वाक्यपदीयन्तु वृद्धाच्छेनापि सिद्धम् । इन्द्रजननीयम् । इन्द्रजननादिराकृतिगणः तेन च विरुद्धभोजनीयमध्यायं व्याख्यास्याम इत्यादि सिद्धम् । अत्र वार्त्तिकम् । द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः । दैवासुरम् । राक्षोसुरम् । वृत्तिकारस्त्वाह इन्द्रजननादेराकृतिगणत्वाद्यथाभिधानं छः सिद्धः । तथा च शिशुक्रन्दादित्रयं न कर्त्तव्यं वार्त्तिकं च नतरामिति ।

सोऽस्य निवासः ॥ २३३ ॥

स्रुघ्नो निवासो वासाधिकरणमस्य स्रौघ्नः । नन्वस्येति कृद्योगे कर्त्तरि षष्ठी । तथा च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणकवासकर्त्ता वृत्त्यर्थः । तथा च तत्र भव इत्येव सिद्धम् । सत्यम् । वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात् । प्रकारकृतो भेदो बोद्धव्यः । वसन्ति हि प्रेम्णि गुणा न वस्तुनीत्यादौ तूपचारो बोध्यः ॥

अभिजनश्च ॥ २३४ ॥

अभिजनवचनाः पूर्वबान्धवा इति वृत्तिः । अभिजायते एभ्य इति व्युत्पत्तेरिति भावः । पूर्वबान्धवाः पित्रादयः । बन्धुशब्दः प्रज्ञादिः । पूर्वसूत्रादिह निवास इत्यनुवृत्तम् । तत्समानाधिकरण्यादभिजनशब्दस्य तत्सम्बन्धिनि लक्षणा । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र यो वसति स तस्य निवासः । यत्र तु पूर्वैरुषितं सोऽभिजन इति विवेकः । योगवि-

भाग उत्तरार्थः।

आयुधजीविभ्यश्छः पर्वते ॥ २३५ ॥

पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येति षष्ठ्यर्थे छः स्यात्। सूत्रे तादर्थ्ये चतुर्थी। आयुधजीविभ्य आयुधजीव्यर्थम्। आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः। हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां ते हृद्गोलीयाः। आयुधजीविभ्यः किम्। ऋक्षोदः पर्वतोऽभिजनो येषां ब्राह्मणानां ते आर्क्षोदाः।

शण्डिकादिभ्यो ञ्यः ॥ २३६ ॥

शण्डिकोऽभिजनोऽस्य शाण्डिक्यः।

सिन्धुतक्षशिलादिभ्योऽणञौ ॥ २३७ ॥

सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे। सैन्धवः। वार्णवः। सिन्धु वर्णु गन्धार मधुमत् कम्बोज कुलूत कश्मीर शाल्व किष्किन्ध गन्धिक उरस् दरत्। सिन्ध्वादयः प्रायेण कच्छादिष्वपि पठ्यन्ते। तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः। वार्वर इति।

तूदीशलातुरवर्मतीकूचवारात् ठक्छण्ढञ्यकः ॥२३८॥

तूदी अभिजनोऽस्य तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः।

भक्तिः ॥ २३९ ॥

सोऽस्येत्यनुवर्तते। भज्यते सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः।

अचित्तादेशकालाट्ठक् ॥ २४० ॥

अणोऽपवादः । वृद्धाच्छं परत्वाद्बाधते । अपूपा भक्तिरस्य आपूपिकः । शाष्कुलिकः । पायसिकः । अचित्तात्किम् । दैवदत्तः । अदेशात् किम् । स्रौघ्नः । अकालात्किम् । ग्रैष्मः ।

महाराजात् ठञ् ॥ २४१ ॥

माहाराजिकः ।

वासुदेवार्जुनाभ्यां वुन् ॥ २४२ ॥

छाणोरपवादः । वासुदेवकः । अर्जुनकः । अल्पाच्तरमजाद्यदन्तमितिसूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतोऽभ्यर्हितं पूर्वं निपततीति । स्यादेतत् । वसुदेवस्यापत्यं वासुदेवः । ऋष्यन्धकेत्यण् । तत्र गोत्रत्वात् क्षत्रियत्वाच्चोत्तरसूत्रेण वुञेवास्तु किमनेन वुना । न ह्यत्र वृद्धौ विशेषः प्रागेव वृद्धत्वात् । न च वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो दोषः वुन्यपि न कोपधाया इति निषेधस्येष्यमाणत्वात् । न चाभ्यर्हितं पूर्वमित्येतज्ज्ञापनमेव फलम् । तथात्वे हि पूर्वनिपातप्रकरण एवाभ्यर्हितग्रहणंमात्रं लाघवात्कुर्यादिति । अत्र भाष्यम् । संज्ञैषा तत्र भवत इति । अयं भावः ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥

इति स्मृतेः परमात्मेह वासुदेवः । सर्वत्रैवासौ वसत्यन्तर्यामित्वात् सर्वमत्र वसति वा सर्वस्य ब्रह्मविवर्त्तत्वादिति वासुः । बाहुलकादुण् । कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणपुमर्वसुविश्वरूपा इति त्रिकाण्डशेषः । वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या नापि क्षत्रियाख्ये-

ति युक्त एव वुन्विधिः । अभ्यर्हितं पूर्वमिति तु प्रसङ्गाज्ज्ञापितम् । तदप्यनित्यम् । श्वयुवमघोनामित्यादिलिङ्गादित्यवधेयम् ॥

गोत्रक्षत्रियाख्येभ्यो बहुलं वुन् ॥ २४३ ॥

अणोऽपवादः । परत्वाद्वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । औपगवकः । क्षत्रियाख्येभ्यः । नाकुलकः । साहदेवकः । बहुलग्रहणान्नेह । पाणिनो भक्तिरस्य पाणिनीयः ।

जनपदिना जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ २४४ ॥

जनपदिनो जनपदस्वामिनः तद्वाचिनां शब्दानां बहुवचनेऽजनपदवाचिना शब्देन समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्चेत्यर्थः । जनपदतदवध्योश्चेतिप्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा नाम जनपदो भक्तिरस्य आङ्गकः । वाङ्गकः । सौपौण्ड्रकः । अङ्गाः क्षत्रिया भक्तिरस्य सोऽप्येवम् । जनपदिनां किम् । पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः । अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः । तत्रातिदेशाभावादणेव भवति । सर्वमित्यस्य प्रयोजनमाह वार्त्तिककारः । सर्ववचनं प्रकृतिनिह्रासार्थम् । तच्च मद्रवृज्यर्थमिति । अयं भावः । वृद्धिनिमित्तेषु वुञादिषु विशेषस्य दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः । सोऽप्यबहुत्व एवेति निह्रासोऽपचयोऽल्पता । तथाहि मद्राणां राजा । द्व्यञ्मगधकलिङ्गसूरमसादण् । माद्रः । वृजिशब्दात्तु वृद्धेत्कोसलाजादाञ्ञ्यङ् । वार्ज्यः । स भक्तिरस्येति प्रकृतिनिह्रासे मद्रकः । वृजिकः । जनपदेन समानशब्दानां किम् । पौरवो

राजा भक्तिरस्य पौरवीयः । बहुवचनग्रहणं किम् । एकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो यथा स्यात् ।

तेन प्रोक्तम् ॥ २४५ ॥

प्रकर्षेणोक्तं प्रोक्तं प्रध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः । पाणिनिना प्रोक्तं पाणिनीयम् । आपिशलम् । काशकृत्स्नम् । प्रकर्षेणेति वचनान्नेह । देवदत्तेनाध्यापितम् ।

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ २४६ ॥

अणोऽपवादः । छन्दसि वाच्येऽयमिष्यते । तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र तु न भवति । शौनकादिभ्यश्छन्दसीत्यत्रास्यानुवर्त्तनात् । छन्दो ब्राह्मणानीति तद्विषयता । यद्यपीमे कल्पाः न तु छन्दो नापि ब्राह्मणम् । तथापि छन्दो ब्राह्मणानीत्यत्र छन्दोग्रहणं स्वर्यते । तेन छन्दःप्रकरणमध्यवर्त्तिनोऽस्यापि तद्विषयता सिध्यति । स्वरितेनाधिकारगतिव्याख्यानात् । यद्वा छन्दो ब्राह्मणानीत्यत्र चकारोऽनुक्तसमुच्चयार्थस्तेन कल्पादेरपि यथाभिधानं तद्विषयता एष्टव्या । तित्तिरिणा प्रोक्तं कल्पमधीयते तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । श्लोकेषु तु अण् न भवति । अनभिधानात् ।

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ २४७ ॥

छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः । इह तु वृद्धिः सिद्धैव । न च वृद्धिनिमित्तस्येति पुंवद्भावनिषेधोऽत्र फलम् । णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः । वृत्तावपि जातेश्चेति सिद्धत्वात् । चरणत्वेन जातित्वात् । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । कौशिकिनः । ऋषिभ्यामि-

ति किम् । इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

कलापिवैशंपायनान्तेवासिभ्यश्च ॥ २४७ ॥

कलाप्यन्तेवासिनां वैशंपायनान्तेवासिनां च ये वाचकाः शब्दाः तेभ्योः णिनिः स्यात् ॥ प्रोक्तार्थेऽणोऽपवादः । छं तु परत्वाद्बाधते । तत्र कलाप्यन्तेवासिनश्चत्वारः । हरिद्रुः । छगली । तुम्बुरुः । उलप इति । वैशंपायनान्तेवासिनस्तु नव । आलम्बिचरकः । कलिङ्गः । कमलः । ऋचाभः । आरुणिः । ताण्ड्यः । श्यामायनः । कठः । कालापीति । उक्तं च । हरिद्रुरेषां प्रथमस्ततः छगलितुम्बुरू । उलपेन चतुर्थेन कालापकमिहोच्यते । आलम्बिश्चरकः प्राचां कलिङ्गकमलावुभौ । ऋचाभारुणिताण्ड्याश्च मध्यमीयास्तयः परे । श्यामायन उदीच्येषु उक्तौ कठकलापिनाविति । चरक इति वैशंपायनस्याख्या तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका उच्यन्ते । इह साक्षाच्छिष्या एव गृह्यन्ते न तु प्रशिष्या अपि । कलापिखाडायनग्रहणात् । तथाहि वैशंपायनान्तेवासी कठः । तदन्तेवासी खाडायनः । तत्किं शौनकादिषु खाडायनस्य पाठेन । हारिद्रविणः । तौंबुरविणः । औलपिनः । छगलिनो ढिनुकं वक्ष्यति । आलम्बिनः । कालङ्गिनः । कामलिनः । आर्चाभिनः । आरुणिनः । ताण्डिनः । श्यामायनिनः । कठाल्लुकं वक्ष्यति । कलापिनश्चाणम् ।

पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ २४८ ॥

तृतीयान्तात्प्रोक्तार्थे णिनिः स्यात् यत्तत्प्रोक्तं पुराणप्रोक्ताश्चेत् ब्राह्मणकल्पास्ते भवन्ति । पुराणेन चिरन्तनेन मु-

निना प्रोक्ताः । ब्राह्मणेषु तावत् । भल्लुशाट्यायनऐतरेय ए-भ्यो णिनिः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः । कल्पेषु । पिङ्ग अरुणपराज । पैङ्गी कल्पः । आरुणपराजी । पुराणप्रोक्तेषु किम् । याज्ञवल्कानि ब्राह्मणानि । आश्मरथः कल्पः । यज्ञवल्काश्मरथशब्दौ करावादी ताभ्यां यञन्ताभ्या-मणि । तद्विषयता तु नेह प्रतिपदं ब्राह्मणोक्तस्य णिनेरेव त-द्विधानात् । एतदर्थमेव हि तत्र ब्राह्मणग्रहणं छन्दस्त्वादेव तद्विषयत्वसिद्धेः । कल्पेषु तर्हि काश्यपिनः कौशिकिन इत्य-त्रैव स्यादिति चेन्न । अस्य योगस्य छन्दोऽधिकारेऽननु-वृत्तेः । स तु अनुवर्त्तत इत्युक्तम् । पुराण इति निपातनात् तुडभावः । न चात्यन्तं बाधः । सिद्धशुष्कपक्वबन्धैश्चेति निपातनादेव सिद्धे शुषः कः पचो व इति सूत्राभ्यामबाध-कान्यपि निपातनानीति ज्ञापितत्वात् । तेन पुरातनमिति सि-द्धम् । सर्वादिसूत्रे भाष्ये तु बाधकान्येव निपातनानीति स्थितम् । तत्र पृषोदरादित्वात्पुरातनशब्दः साधुः ॥

शौनकादिभ्यश्छन्दसि ॥ २४९ ॥

एभ्यो णिनिः स्यात् प्रोक्ते । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसि किम् । शौनकीया शिक्षा । कठशाठ इति पठ्यते । तत्सङ्घातार्थम् । के-वलाद्धि लुकं वक्ष्यति । कठशाठाभ्यां प्रोक्तमधीयते काठशा-ठिनः । खाडायनोऽत्र पठ्यते । तत्पाठो ज्ञापनार्थ इत्युक्तमेव । कलापिग्रहणादेव तत्सिद्धिरिति चेत् तर्ह्यन्यतरेण साक्षाच्छि-ष्यग्रहणे ज्ञापिते सामर्थ्यादधिकविधानार्थं सत् इतरोपादानं परम्पराशिष्ये अप्राप्तस्य विध्यर्थमिति गृहाण ।

कठचरकाल्लुक् ॥ २५० ॥

आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठशब्दाद्वैशम्पायनान्तेवासित्वात् णिनिः । चरकादण् । तयोर्लुक् । कठेन प्रोक्तमधीयते ये ते कठाः । छन्दसीत्येव । काठाः चारकाः श्लोकाः ।

कलापिनोऽण् ॥ २५१ ॥

णिनेरपवादः । वैशंपायनान्तेवासित्वात्प्राप्तिः । कलापिना प्रोक्तमधीयते कालापाः । इनरायनपत्य इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारीत्याद्युपसंख्यानाट्टिलोपः । अण्ग्रहणसामर्थ्यादधिकविधानार्थं सत् बाधकबाधनार्थम् । तेन माथुरेण प्रोक्ता माथुरी वृत्तिः । सौलभानि ब्राह्मणानि । मौदाः । पैप्पलादाः शाकला इति सिद्धम् । मुद पिप्पलाद शाकल्य एभ्यः पुराणप्रोक्तेष्विति णिनेरपवादोऽण् ।

छगलिनो ढिनुक् ॥ २५२ ॥

कलाप्यन्तेवासित्वात् णिनेरपवादः । छगलिना प्रोक्तमधीयते छागलेयिनः ।

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ २५३ ॥

मण्डूकप्लुत्या णिनिरिह संबध्यते । तद्विषयतेहेष्यते । तदर्थं छन्दोग्रहणमनुवर्त्यं सूत्रयोश्छन्दस्त्वं तु गौणं बोध्यम् । पाराशर्येण प्रोक्तं भिक्षसूत्रं चतुर्लक्षणीरूपमधीयते पाराशरिणो भिक्षवः । शिलामलते शिलालाः । अल भूषणपर्याप्तिवारणेषु सुप्यजाताविति णिनिः । ततोऽस्मिण्णिनौ टिलोपः । शैलालिनो नटाः । भिक्षुनटसूत्रयोः किम् । पाराशरम् । शैलालम् ।

कर्मन्दकृशाश्वादिनिः ॥ २५४ ॥

आभ्यां प्रोक्ते इनिः स्यात् । कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः । भिक्षुनटसूत्रयोरित्येव । कार्मन्दम् । कार्शाश्वम् ।

तेनैकदिक् ॥ २५५ ॥

सुदाम्नाद्रिणा एकदिक् । सौदामनी ।

तसिश्च ॥ २५६ ॥

पीलुमूलतः ।

उरसो यच्च ॥ २५७ ॥

चात्तसिः । अणो ऽपवादः । उरसो एकदिक् उरस्यः । उरस्तः ।

उपज्ञाते ॥ २५८ ॥

तेनेत्येव । विनोपदेशं ज्ञातमुपज्ञातम् । पाणिनिनोपज्ञातं पाणिनीयम् ।

कृते ग्रन्थे ॥ २५९ ॥

तेनेत्येव । वररुचिना कृतो वाररुचो ग्रन्थः ।

संज्ञायाम् ॥ २६० ॥

तृतीयान्ताव कृतेऽर्थे प्रत्ययाः स्युः संज्ञायाम् । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकम् । गार्मुतम् । पैत्तिकम् । मधुनः संज्ञा एताः ।

कुलालादिभ्यो वुञ् ॥ २६१ ॥

तेन कृते संज्ञायामित्यनुवर्त्तते । कुलालेन कृतं कौलालकम् । वारुडकम् ।

क्षुद्राभ्रमरवटरपादपादञ् ॥ २६२ ॥

तेन कृते संज्ञायामित्यनुवर्त्तते । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपशब्दाच्छे प्राप्ते अन्येभ्योऽणि अञ्विधीयते । केचित्तु पादपशब्दस्थाने पदपशब्दं पठन्ति तन्मतेऽण एवायमपवादः ।

इति श्रीशब्दकौस्तुभे चतुर्थस्य तृतीयपादे प्रथममाह्निकम् ।

तस्येदम् ॥ २६३ ॥

अणादयः पञ्च महोत्सर्गाः घादयश्च षष्ठ्यन्तात्संबन्धिनि स्युः । उपगोरिदमौपगवम् । राष्ट्रियमित्यादि । अनन्तरादिष्वनभिधानान्न । वहेस्तुरणिट् च । संवोढुः स्वं सांवहित्रम् । तुरिति तृन्तृचोः सामान्यग्रहणम् । ढत्वादीनामसिद्धत्वादलौकिकप्रक्रियावाक्ये पूर्वमिट् । ततो निमित्ताभावान्न ढत्वादि । सिद्ध एवात्राण् इडर्थमुपसंख्यानम् । अग्नीधः शरणे रण् भं च । अग्निमिन्धे इत्यग्नीत् क्विप् । ऋत्विग्विशेषोऽयम् । त्वमग्निद्दतीयत इत्यत्र तु छान्दसं ह्रस्वत्वम् । शरणं गृहं स्थानं तत्राग्नीध्रम् । तास्थ्यात् मञ्चाः क्रोशन्ति इति वदृत्विजि प्रयोगः कल्पसूत्रकाराणम् । प्रत्याश्रावयेदाग्नीध्रमिति । ततः शरणे छः आग्नीध्रीयं धिष्ण्यं परीत्येति रञो ञित्वमाद्युदात्तार्थम् । तथ च प्रयुज्यते । पिवाग्नीध्रात्तव भागस्य तृणुहीति कश्चित् । तन्न । रण् भं चेति सांप्रदायिकणित्वपाठविरोधात् । पाञ्चमिकभाष्यविरोधाच्च । आग्नीध्रसाधारणादञितिवार्त्तिके हि आग्नीध्रमिति भाष्ये उदाहृतम् । अञ् प्रयुक्त आद्युदात्त इति हि तस्याशयः । रञिति पाठे तु तच्च सङ्गच्छेतेति दिक् । समिधामाधाने षेण्यण् । सामिधेन्यो

मन्त्रः । षित्त्वान्ङीष् । सामिधेनी । हलस्तद्धितस्येति यलोपः । इह ययाग्निः समिध्यते सा समित् । संपदादित्वात् करणे क्विप् । ततः कर्मणि षष्ठ्यन्तादाधानकरणे तद्धितः । पाय्यसान्नाय्येति सूत्रे सामिधेनीष्विति निपातनादेतत्सिद्धम् ।

रथाद्यत् ॥ २६४ ॥

अणोऽपवादः । रथाद्रथाङ्गे इति वार्त्तिकम् । रथस्येदं रथ्यं चक्रं युगं वा । कथं तर्हि रथस्य वोढा रथ्य इति तद्वहतीति । यद्येवं । अयमेव तद्वोढर्यपीष्यताम् । तद्वहतीत्यत्र तु रथग्रहणं मा कारि । मैवम् । द्वौ रथौ वहति द्विरथ्य इत्यत्र द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयलुक्प्रसङ्गात् । यत्तु द्वयो रथयोरङ्गं तत्र द्विरथ इत्येव भवति । रथसीताहलेभ्यो यद्विधाविति तदन्तविधेरुपसंख्यानात् । अत एव परमरथ्यमिति सिद्धम् । ननु द्विगोर्लुगनपत्य इत्यत्राचीत्यस्यापकर्षपक्षे कथमत्र यतो लुगिति चेत् सत्यम् । तद्वहतीत्यत्ररथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग्भवतीति अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यादिति ।

पत्त्रपूर्वादञ् ॥ २६५ ॥

रथादित्येव । पूर्वस्य यतोऽपवादः । पतन्त्यनेन पत्त्रं वाहनम् । दाम्नीत्यादिना ष्ट्रन् । अश्वयुक्तो रथोऽश्वरथः तस्यास्याङ्गमाश्वरथम् ।

पत्त्राध्वर्युपरिषदश्च ॥ २६६ ॥

एभ्योऽञ् स्यादणोऽपवादः । पत्त्राद्वाह्ये इति वार्त्तिकम् । अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् । इह पत्त्रेत्यर्थग्रहणे इतरयोस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम् ।

हलसीराट्ठक् ॥ २६७॥

हलस्येदं हालिकम्। सैरिकम्।

द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ २६८ ॥

अणोऽपवादः। छं तु परत्वाद्वाधते। काकोलूकिका। काकोलूकस्य वैरमित्यर्थः। कुत्सकुशिकयोर्मैथुनिका। विवाहरूपः सम्बन्ध इत्यर्थः। मिथुनं दम्पती तस्य कर्म क्रिया निष्पादनम्। मनोज्ञादित्वाद् वुञ्। वुञन्तश्चेह स्त्रियां स्वभावात्। वैरे देवासुरादिभ्यः प्रतिषेधः। दैवासुरम्। राक्षोसुरम्।

गोत्रचरणाद् वुञ् ॥ २६९ ॥

तस्येदमित्यर्थे। अणोऽवादः। छं तु परत्वाद्वाधते। ग्लौचुकायनकम्। औपगवकम्। चरणाद्धर्माम्नाययोरिति वार्त्तिकम्। काठकम्। कालापकम्। वुनि प्रकृते वुञ्विधिरवृद्धेषु वृद्ध्यर्थः। पुंवद्भावनिषेधस्तु कोपधत्वादेव सिद्धः।

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ २७० ॥

तस्येदमित्यर्थे। पूर्वस्य वुञोऽपवादः। सङ्घादिषु घोषग्रहणमिति वार्त्तिकम्। अत एव यथासंख्यमपि न वैषम्यात्। तिस्रः प्रकृतयः प्रत्ययार्थविशेषणानि चत्वारि तत्र द्वादशोदाहरणानि। अञ्। बैदः सङ्घोऽङ्को घोषो वा। बैदं लक्षणम्। यञ्। गार्गः। गार्गम्। इञ्। दाक्षः। दाक्षम्। अङ्कलक्षणयोर्निघण्टुपर्यायत्वं प्रसिद्धम्। कलङ्काङ्कौ लाञ्छनं च चिन्हं लक्ष्म च लक्षणमित्यमरः। तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरता। परम्परासम्बन्धोऽङ्कः यथा गवादिनिष्ठः स्वामिना गोद्वारा सम्बन्धः। साक्षात्तु लक्षणम्।

यथा बिदानां विद्या। घोष आभीरस्थानम् । णित्वं ङीप्पुंवद्भावनिषेधाय च । वैदी विद्या यस्य वैदीविद्यः। विदानामसाधारणी या विद्या तद्वानित्यर्थः।

शाकलाद्वा ॥ २७१ ॥

अस्मादण् वा स्यादुक्तेऽर्थे। पक्षे चरणत्वाद् वुञ्। शकलेन प्रोक्तमधीयते शाकलाः। तेषां सङ्घः अङ्कः घोषो वा शाकलः। लक्षणे क्लीबता।

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ २७२ ॥

सङ्घादयो निवृत्ताः। एभ्यो ञ्यः स्यात्तस्येदमर्थे । चरणशब्देभ्यो वुञोऽपवादः। नटात्तु औत्सर्गिकस्याणः। चरणाद्धर्माम्नाययोरित्युक्तम्। तत्साहचर्यान्नटशब्दादपि तयोरेव। छन्दोगानां धर्म आम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम् । बाह्वृच्यम्। नाट्यम्। अन्यत्र छान्दोगं कुलमित्यादि।

न दण्डमाणवान्तेवासिषु ॥ २७३ ॥

दण्डप्रधाना माणवाः तेषु शिष्येषु च वुञ् न स्यात्। गोत्रग्रहणमिहानुवर्त्तते । तेन वुञः प्रतिषेधोऽयम् । दाक्षाः प्लाक्षाः दण्डमाणवाः शिष्या वा।

रैवतिकादिभ्यश्छः ॥ २७४ ॥

तस्येदमित्यर्थे । एषां गोत्रप्रत्ययान्तत्वाद् वुञि प्राप्ते छो विधीयते। रैवतिकीयः । औदमेधीयाः । बैजवापीयाः। अत्र वार्त्तिकद्वयम्। कौपिञ्जलहास्तिपदादण् आथर्वणिकस्येकलोपश्चेति। द्वयमपीदं वृत्तिकृता सूत्रमध्ये प्रक्षिप्तमिति हरदत्तः। आद्यं वार्त्तिकं द्वितीयं सूत्रमिति तु कैयटः। त-

त्राद्यो गोत्रवुञोऽपवादः । द्वितीयस्तु चरणवुञः । कपिञ्जलस्यापत्यम् । अस्मादेव निपातनादण् । तदन्तात्पुनरण् । कौपिञ्जलः । हस्तिनः पाद इव पादो यस्य हस्तिपादः । पादस्य लोपो न भवति अहस्त्यादिभ्य इति वचनात् । हस्तिपादस्यापत्यम् । अस्मादेव निपातनादण् पद्भावश्च । हास्तिपदः । ततः पुनरण् । हास्तिपदः । आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा चरणाद्धर्माम्नाययोरित्युक्तम् । आथर्वणिकस्तु द्वेधा व्युत्पादितः । तथाहि अथर्वणा प्रोक्तो वेदोऽथर्वाः अभेदोपचारात् तमधीते वसन्तादित्वाट्ठक् । दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः । यद्वा प्रोक्तेऽण् । ततश्छन्दोब्राह्मणानीति तद्विषयतायामाथर्वणशब्दस्याऽपि वसन्तादिषु पाठादध्येतरि ठक् । तस्य विधानसामर्थ्यात् प्रोक्ताल्लुगिति लुङ् नेति । समाप्ताः शैषिकाः ।

## तस्य विकारः ॥ २७५ ॥

षष्ठ्यन्ताद्विकारे अणादयः स्युः अप्राणि आद्युदात्तं अवृद्धं प्रतिपदमवक्ष्यमाणप्रत्ययं चेहोदाहरणम् । अश्मनो विकार आश्मः । अश्मनो विकार इति लोपः पाक्षिकः । भास्मनः । मार्त्तिकः । नित्स्वरेणाद्युदात्ता एते । अश्मन् भस्मन् शब्दौ हि मनिन् प्रत्ययान्तौ मृदस्तिकन् । घादिसम्बद्धस्य ग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् । अणादयस्तु न निवर्त्तन्ते प्राक् दीव्यतः प्राग्भवनादिति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । हालः । सैरः ।

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ २७६ ॥

चाद्विकारे । तेन वक्ष्यमाणाः प्रत्ययाः प्राण्यादिभ्यः वि-

भ्योऽर्थद्वये । अन्येभ्यस्तु विकार एव । तत्र प्राणिभ्योऽञ् वक्ष्यति । मयूरस्यावयवो विकारो वा मायूरः । औषधिभ्यः मौर्वं काण्डं भस्म वा । मूर्वाशब्दस्तृणधान्यानां च द्व्यषामित्याद्युदात्तः । पैप्पलः ।

बिल्वादिभ्योऽण् ॥ २७७ ॥

बैल्वम् । व्रीहिमुद्गाशब्दौ घृतादित्वादन्तोदात्तौ । मसूरगोधूमगवेधुकाशब्दा लघावन्ते द्वयोश्चेति मध्योदात्ताः । इषेः क्सुः । इक्षुः । प्रत्ययस्वरेणान्तोदात्तः । वेणुशब्दो वेञिन्धानयोरिति पक्षेऽन्तोदात्तः । कृञः पास इति पासे कृते कर्पासीशब्दो जातिलक्षणङीपन्तः । कर्कन्धूशब्दोऽलाबूकर्कन्धूदिधीषूरिति निपातनान्मध्योदात्तः । कुटीशमीशुण्डाभ्यो रः । प्रत्ययस्वरेणान्तोदात्तः । तत्र काण्डपाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः । शेषेभ्यस्तु । अनुदात्तादिलक्षणस्याञः । गवेधुकाशब्दस्य कोपधत्वादेव सिद्धे मयड् वैतयोरित्यादिना प्राप्तस्य मयटो बाधनार्थं ग्रहणम् । शेषेभ्यस्त्ववृद्धेभ्यः पक्षे मयट् भवत्येव । अण्ग्रहणं बाधकबाधनार्थम् । बिल्वादयो यथाविहितमिति ह्युक्ते पाटलीशब्दादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनात् अञेव स्यात् ।

कोपधाच्च ॥ २७८ ॥

अण् स्यात् । अञोऽपवादः । तर्कु तार्कवम् । ओरञ् प्राप्तः । तैत्तिडीकम् । तिन्तिडीकशब्दो लघावन्त इति मध्योदात्तः ।

त्रपुजतुनोः षुक् ॥ २७९ ॥

आभ्यामण् स्याद्विकारे तयोः षुकागमश्च । ओरञोऽपवादः ।

त्रपुणो विकारः त्रापुषम् । जातुषम् ।

ओरञ् ॥ २८० ॥

दैवदारवम् । देवदारुभद्रदारुशब्दौ पीतद्रर्थानामित्याद्युदात्तौ ॥

अनुदात्तादेश्च ॥ २८१ ॥

दाधित्थम् । गार्मुतम् । गर्मुच्छब्दो ग्रो मुट् चेत्युतिप्रत्ययान्तः । कथं तर्हि तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेदित्यत्रान्तोदात्ततेति चेत् व्यत्ययेनेति नोत्वत्सूत्रे प्रामाणिकाः ।

पलाशादिभ्यो वा ॥ २८२ ॥

उभयत्र विभाषेयम् । पलाशखदिरशिंशपास्यन्दनानां अनुदात्तादित्वात्प्राप्ते अन्येषामप्राप्ते । पालाशम् । पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दोऽजिरशिशिरेत्यादौ किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दो अथ द्वितीयं प्रागीषादिति वर्तमाने पान्तानां गुर्वादीनामिति मध्योदात्तः । स्पदि किञ्चिच्चलने अनुदात्तेतश्च हलादेरिति युच् । किरतेरीरन् करीरम् । कॄतॄभ्यामीषन् शॄपॄभ्यां किच्च शिरीषम् । नित्स्वरेणाद्युदात्तावेतौ । विकङ्कतपूलासयवासशब्दा ग्रामादीनां चेत्याद्युदात्ताः ॥

शम्या ष्लञ् ॥ २८३ ॥

षिदयम् । टिदिति तु माधवः । अञो ऽपवादः । शामीलं भस्म । शामीली स्रुक् । चातुर्मास्येषु वरुणप्रघासे शामील्यः स्रुवो भवन्तीति श्रुतम् । शमीशब्दो गौरादिङीषन्तः ।

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ २८४ ॥

प्रकृतिमात्रान्मयट् वा स्यात्। अश्ममयम् । आश्मम्। भाषायां किम् । खादिरो यूप इति वृत्तिकाराः । वस्तुतस्तु वेदे बह्वृचः प्रयुक्तस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहार्थमेवेदम् । द्व्यचश्छन्दसीतिसूत्रस्य द्व्यच एवेति नियमार्थत्वे यद्यपीदं गतार्थं तथापि विपरीतनियमाशङ्का निवृत्त्यर्थं बोध्यम् । अभक्ष्याच्छादनयोरिति किम् । मौद्गः सूपः । कार्पासमाच्छादनम् । अधिकारादेव सिद्धे एतयोरिति वचनमित उत्तरेषां प्राणिरजतादिभ्योऽञ् इत्येवमादीनामपि विषये पक्षे प्रवृत्त्यर्थम्। कपोतमयम् । इह विकारावयवाभ्यां सह प्रत्येकमभक्ष्याच्छादनयोरिति सम्बध्यते । समासनिर्देशात् । अतो यथासंख्यं न । अत्रेदमवधेयम् । आनन्दमयोऽभ्यासादित्यधिकरणे विकारशब्दान्नेति चेन्न प्राचुर्यादिति सूत्रयतो व्यासस्यापि आनन्दशब्दस्य बह्वच्कतया छन्दसि विकारे मयट् न लभ्यत इत्येव आशयः । अत एव प्रायपाठोऽप्यकिञ्चित्करः । उभयसम्भव एव तस्य निर्णायकत्वात् । एतच्च वृत्तिकृतामनुकूलम् । उत्तरमीमांसाभाष्यकारैस्तु विकार एवायं मयडिति सिद्धान्तितम् । तेषामयं भावः अन्नमयप्राणमयमनोमयेषु द्व्यच्त्वाद्यद्यपि सिद्धिस्तथापि विज्ञानमये तावद्विकारे मयडर्थं वृत्तिकृद्भिरपि यतनीयं तत्रायं यत्नः तात्पर्यग्रहस्य न्यायानुसंधानेनैव सिद्धेस्तदर्थं पाणिनिना सूत्रारम्भदर्शनाच्चेह भाषाग्रहस्त्याज्यः। तथा च द्व्यचश्छन्दसीति नोत्वद्वर्ध्रेति च द्विसूत्र्यपि त्याज्या । छन्दसि सकलविकल्पानां व्यवस्थिततायाः सर्वसम्मतत्वात् । उक्तं नित्यं छन्दसीत्यादीनां वैयाकरणैरित्थमेव प्रत्याख्यातत्वाच्च । श्रीग्रामण्योश्छन्दसीत्यत्र श्रियश्छन्द-

सीत्यंशं प्रत्याचक्षाणेन भगवतापि ध्वनितमेतत् । तथा चानन्दमय इत्यत्रापि विकार एव मयडस्तु ऐकरूप्यात् । यद्वा प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात्प्रकृते विकार एव पर्यवस्यतीति । अथवा नित्यं वृद्धेत्यत्र भाषाग्रहणं मानुवर्तिं अनुवृत्तावपि सख्यशिश्वीतिसूत्रे इति शब्दवलेनेवैहापि नित्यग्रहणवलेन भाषायां नित्यमन्यत्रापि क्वचिदिति व्याख्यामाश्रित्य छन्दस्यपि क्वचिन्मयटः सम्भवात् । अत एव शरादिषु मृच्छब्दपाठोऽप्यर्थवान् । मोषुवरुणमृन्मयंगृहंराहंराजहंगमामिति प्रयोगात् । यद्वा आगतार्थे मयट् विकार इति स्वार्थिकार्थकथनमिति दिक् ।

नित्यं वृद्धशरादिभ्यः ॥ २८५ ॥

भाषायामभक्षाछादनयोरिति अनुवर्त्तत इति वृत्तिः । आम्रमयम् । शरमयम् । आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिन्नित्यार्थम् । तेनैकाचो नित्यमिति सिद्धम् । त्वङ्मयम् । स्रङ्मयम् । कथं आप्यमम्मयमित्यमरः । अत्राप्यमिति प्रमाद एवेति वहवः । तस्येदमित्यणन्तात् स्वार्थे ष्यञित्यन्ये । शर दर्भ मृत् कुटी तृण सोम वल्वजा एकाचूत्वादेव सिद्धे मृच्छब्दस्येह पाठः प्रपञ्चार्थः । वृद्धान्मयट्प्राग्दीव्यतीयानामपवादः ।

गोश्च पुरीषे ॥ २८६ ॥

गोमयं पुरीषं न विकारो नाप्यवयवः । तथापि तस्येदमित्यर्थेऽयं प्रत्ययः ।

पिष्टाच्च ॥ २८७ ॥

मयड् स्याद्विकारे । अणोऽपवादः । पिष्टमयम् भस्म । कथं

पैष्टी सुरेति सामान्यविवक्षायां तस्येदमित्यण् ।

संज्ञाया कन् ॥ २८८ ॥

पिष्टादित्येव । पिष्टस्य विकारविशेषः । पिष्टकः ।

व्रीहेः पुरोडाशे ॥ २८९ ॥

मयट् स्यात् बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः व्रैहमन्यत् ।

असंज्ञायां तिलयवाभ्याम् ॥ २९० ॥

तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः । यवशब्दाद्विकारेऽण् ततो यावादिभ्य इति स्वार्थे कन् ।

द्व्यचश्छन्दसि ॥ २९१ ॥

शरमयं बर्हिः ।

नोत्वद्वर्ध्रबिल्वात् ॥ २९२ ॥

द्व्यच इति प्राप्तः प्रतिषिध्यते । उत्वानुकारवान् । मौञ्जं शिक्यम् । मुञ्जशब्दस्य तृणधान्यानां चेत्याद्युदात्तत्वादौत्सर्गिकोऽण् वर्ध्रं चर्म । वर्ध्रशब्द आद्युदात्तः । वृद्धिवपिभ्यां रन् । ततोऽण् । ठिड्ढेतिङीप् । वार्ध्री रज्जुः । वध्रीति तु वधेरौणादिके ष्ट्रनि । नध्री वध्री वरत्रा चेत्यमरः । वध्राः पश्य वध्रिकाः पश्येति भाष्यम् । वाध्र्यश्वस्य नामेति वेदे प्रयोगः । बैल्वः । तपरकरणाद् धूममयम् । मतुन्निर्देशस्तदन्तविधिं वारयितुम् । इहैव हि स्याद्वैणवी यष्टिरिति ।

तालादिभ्योऽण् ॥ २९३ ॥

अञ्मयटोरपवादः । तालश्यामाकाभ्यां हि वृद्धत्वा-

न्मयट् प्राप्तः । वर्हिणां विकारो वार्हिणम् । प्राणिरजतादिभ्यो-ऽञ् । ततो ञितश्च तत्प्रत्ययादित्यञ् प्राप्तः । शेषेभ्य-स्त्वनुदात्तादित्वादञ् प्राप्तः । तथाहि लिशिदृशिभ्यामिन्द्र-शब्द उपपदे मूलविभुजादित्वात्कः अन्येषामपीति दीर्घः । इन्द्रालिश । इन्द्रादृश । चप सान्त्वने । पचाद्यच् । चापः । पी-यूक्षा लघावन्त इति मध्योदात्तः । फिष् इत्यधिकारादापः प्रागेव स्वरप्रवृत्तेः । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । अत्र गणसूत्रम् । तालाद्धनुषि । तालं धनुः । अन्यत्र तालमयम् । अणूग्रहणं बाधकबाधनार्थम् । यथाविहिताविधौ वार्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात् । ञितश्च तत्प्रत्यया-दित्यञो बाधनेन वचनस्य चरितार्थत्वात् ।

जातरूपेभ्यः परिमाणे ॥ २९४ ॥

बहुवचनात् पर्यायग्रहणम् । हाटकस्तापनीयः सौवर्णो वा निष्कः । परिमाणे किम् । हाटकमयी यष्टिः ।

प्राणिरजतादिभ्योऽञ् ॥ २९५ ॥

अनुदात्तादेरञः सिद्धत्वात् परिशिष्टमिहोदाहरणम् । शौ-कम् । बाकम् । शुकबकशब्दौ प्राणिनां कुपूर्वाणामित्या-द्युदात्तौ । किञ्च अनुदात्तादिरपि वृद्ध इहोदाहरणम् । श्वा-विधो विकारः शौवाविध इति अनुदात्तादेरञः परोपि मय-डनेनाञा परत्वाद्बाध्यते । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः श्वाविच्छब्दः द्वारादित्वादैच् । राजतम् । रजत । सीस । लोह । उदुम्बर । नीप । दारु । रोहीतक । बिभीतक । पीतदा-

रु। वृद्धदारु। त्रिकण्टक। कण्टकार। रजतादिष्वनुदात्तादीनां पुनः पाठो मयड्बाधाय।

ञितश्च तत्प्रत्ययात् ॥ २९६ ॥

ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात् तयोरेवार्थयोः। मयटोऽपवादः। ओरञ्। शम्याः ष्लञ्। प्राणिरजतादिभ्योऽञ्। उष्ट्राद् वुञ्। एण्या ढञ्। कंसीयपरशव्ययोर्यञञौ। दैवदारवस्य विकारोऽवयवो वा दैवदारवम्। दाधित्थम्। शामीलस्य शामीलम्। इत्यादिञितः। वैल्वयमिति वृत्तिकाराः। भाष्ये तु विकारावयवप्रत्ययान्तात्पुनस्तत्प्रत्ययो ऽनभिधानान्नेत्याश्रित्य सूत्रं प्रत्याख्यातम्। द्रुवयात्फललाच्चेष्यते द्रौवयं मानम्। कापित्थो रसः। कपित्थशब्दानुदात्तादेश्चेत्यञः फले लुक्। पुनरञ्। सूत्रारम्भे हि वैल्वस्य विकार इत्यत्रापि मयट् स्यात्। किञ्च औष्ट्रकस्य चर्मणो विकार औष्ट्रिकोपानदित्यत्र ठिड्ढाणञिति ङीप् स्यात्। न चेष्यते तथा च सौनागाः पठन्ति वुञश्चाञ् कृतप्रसङ्ग इति तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्दो अभेदोपचाराद्वर्त्तत इत्येव शरणमिति सिद्धान्तितम्। तस्माद् वृत्तिग्रन्थः सूत्रकाराभिप्रायवर्णनमात्रपरतया नेयः।

क्रीतवत् परिमाणात् ॥ २९७ ॥

पञ्चमे प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्तेऽणादीनामपवादः। संख्योन्माने अपि परिमाणग्रहणेन गृह्येते न तु रूढिपरिमाणमेव। निष्केण क्रीतं नैष्किकम्। एवं नि-

ष्कस्य विकारो नैष्किकः । शतस्य विकारः शत्यः । शतिकः । शताच्च ठन्यतौ । साहस्रः । शतमानविंशतिकसहस्रवसनादण् ।

उष्ट्राद् वुञ् ॥ २९९ ॥

प्राग्दीव्यतीयाणोऽपवादः । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ।

उमोर्णयोर्वा ॥ ३०० ॥

औमम् । औमकम् । और्णम् । और्णकम् । उमाशब्दस्तृणधान्याद्युदात्तः । ऊर्णाशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । ताभ्यां वुञभावे यथाक्रममणञौ ।

एण्या ढञ् ॥ ३०१ ॥

प्राण्यञोऽपवादः । ऐणेयं मांसम् । एणस्य तु ऐणम् ।

गोपयसोर्यत् ॥ ३०२ ॥

गव्यम् । पयस्यम् । यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव तथापि मयड् वैतयोरिति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः ॥

द्रोश्च ॥ ३०३ ॥

ओरञोऽपवादः । एकाचो नित्यमिति मयटो वा । द्रुर्वृक्षः । पलाशी द्रुद्रुमागमा इत्यमरः । द्रोर्विकारोऽवयवो वा द्रव्यम् । ओर्गुणः वान्तोयिप्रत्यये । पृथिव्यादिषु तु गुणैर्द्रूयते आश्रीयत इति द्रुधातोरचो यदिति यत्प्रत्ययान्तो द्रव्यशब्दः ।

माने वयः ॥ ३०४ ॥

द्रोरित्येव । यतोऽपवादः । द्रोर्विकारभूतं प्रस्थादि परिमाणं द्रुवयम् । यौतवं द्रुवयम् । यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयमित्यमरः ।

## फले लुक् ॥ ३०५ ॥

विकारावयवप्रत्ययस्य लुक् स्यात्फले । आमलक्याः फलमामलकम् । मयटो लुक् । लुक् तद्धितलुकि । फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च ।

## प्लक्षादिभ्योऽण् ॥ ३०६ ॥

अञोऽपवादः । शिग्रुकर्कन्धुशब्दयोरुवर्णान्तत्वादितरेषां त्वनुदात्तादित्वादञः प्राप्तिः । विधानसामर्थ्यादणो न लुक् । प्लाक्षम् । प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु कर्कन्धु बृहती । इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फल इत्यमरः । न्यग्रोधशब्दो लघावन्त इति मध्योदात्तः । न्यग्रोधस्य च केवलस्येत्यैजागमः ।

## जम्ब्वा वा ॥ ३०७ ॥

जम्बूशब्दात्फलेऽण् वा स्यात् । पक्षे ओरञित्यनुदात्तादेश्चेति वा उत्पन्नस्याञः फले लुगिति लुक् । जम्बु । जाम्बवम् ।

## लुप् च ॥ ३०८ ॥

जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । लुपि युक्तवत् । जम्ब्वाः फलं जम्बूः । फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवमित्यमरः । फलपाकशुषामुपसंख्यानम् । व्रीहयः । मुद्गाः । पुष्पमूलेषु बहुलम् । मल्लिकायाः पुष्पं मल्लिका । अनुदात्तादिलक्षणस्याञो लुप् । मल्लिकाशब्दो मध्योदात्तः । अथ द्वितीयं प्रागीषात् त्र्यषां प्राङ्नकरादिति सूत्राभ्यां त्र्यषां द्वितीयमित्यनुवृत्तौ मादीनां वेति फिट्सूत्रात् मादीनां त्र्यचां द्वितीय-

मुदात्तमित्यर्थः । वनमालिका । लघावन्त इति मध्योदात्तोऽयम् । जात्याः पुष्पं जाती । विदार्या मूलं विदारी । अंशुमती । बृहती । जातीविदारीशब्दौ गौरादिङीषन्तौ । अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ततो मतुप् । ह्रस्वनुड्भ्यां मतुबिति मतुबकार उदात्तः । बृहन्महतोर्नघजाद्युदात्तत्व उपसंख्यानात् बृहतीशब्दो ऽन्तोदात्तः । बहुलग्रहणान्नेह । पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकादेव क्वचिल्लुक् लुपोऽभावश्च । कदम्बं पुष्पम् । अशोकम् । करवीरम् । एते लघावन्त इति मध्योदात्ताः । अनुदात्तादिलक्षणस्याञो लुक् । बैल्वानि । बिल्वाद्यण् । इह न लुप्लुकौ ।

हरीतक्यादिभ्यश्च ॥ ३०९ ॥

एभ्यः फलप्रत्ययस्य लुप् स्यात् । अत्र लिङ्गं युक्तवत् । वचनं तु विशेष्यवदेव । हरीतक्यादिषु व्यक्तिरित्युक्तत्वात् । हरीतक्याः फलं हरीतकी । कोशातकी । इह द्राक्षाप्रभृतिभ्यो मयटो लुप् । अनुदात्तादिभ्योऽञः । इतरेभ्यस्त्वणः ।

कंसीयपरशव्ययोर्यञञौ लुक् च ॥ ३१० ॥

कंसीयपरशव्यशब्दाभ्यां विकारेऽर्थे यथासंख्यं यञञौ स्तः छयतोश्च लुक् । कंसाय हितं कंसीयम् । तस्य विकारः कांस्यम् । परान् शृणाति परशुः तस्मै हितं उगवादिभ्यो यत् । परशव्यं दारु । तस्य विकारः पारशवः । परशव्यस्यानुदात्तादित्वादाञि सिद्धे लुगर्थं वचनम् । ननु यस्येतिलोपे कृते हलस्तद्धितस्येति यलोपेन सिद्धम् । मैवम् । ईतीत्यनुवृत्तेः । अन्यार्थतया कृतात् प्रा-

तिपदिकाधिकारादेवेह धातुप्रत्यययोर्लुङ् न ॥

इति श्रीशब्दकौस्तुभे चतुर्थस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

## प्राग् वहतेष्ठक् ॥ १ ॥

तद्वहतीत्यतः प्राक् ठगधिक्रियते । तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् । वाक्यादयं प्रत्ययविधिः । माशब्दिकः । माशब्दः कारीति यो निषेधति स एवमुच्यते । आहौ प्रभूतादिभ्य उपसङ्ख्यानम् । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । क्रियाविशेषणात्प्रत्ययः । आहेतिपदे एकदेशस्य प्रकृतिभागस्योच्चारणार्थेनेकारेणाहाविति निर्देशः । पृच्छतौ सुस्नातादिभ्यः । सुस्नातं पृच्छति सौस्नातिकः । सौखशायनिकः । अनुशतिकादिः । गच्छतौ परदारादिभ्यः । परदारान् गच्छति पारदारिकः । गौरुतल्पिकः ।

## तेन दीव्यति खनति जयति जितम् ॥ २ ॥

अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । कौद्दालिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । दीव्यतीत्यादौ कालपुरुषसङ्ख्या अविवक्षिताः । अदेवीत् देविष्यति वा आक्षिकः । एवं देविष्यसि देविष्यामि वा । दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकन्तु विवक्षितमेव । अत एव जयति जितमिति कर्तृकर्मणोः पृथगुपादानम् ।

संस्कृतम् ॥ ३ ॥

योगविभाग उत्तरार्थः । दध्ना संस्कृतं दाधिकम् । मारिचिकम् ।

कुलत्थकोपधादण् ॥ ४ ॥

ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् ।

तरति ॥ ५ ॥

उडुपेन तरति औडुपिकः ।

गोपुच्छाट्ठञ् ॥ ६ ॥

गौपुच्छिकः ।

नौद्व्यचष्ठन् ॥ ७ ॥

नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री । षकारः सांहितिको न त्वनुबन्ध इति न ङीष् । तथाच श्लोकवार्त्तिकम् । आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात् किशरादेः षितः षडेते ठगधिकारे इति विधिवाक्यापेक्षमिह षट्त्वं षडित्यस्य षड्भिर्वाक्यैर्विधेये लक्षणेति यावत् । प्रत्ययास्तु सप्त । कुसीदादिसूत्रेण द्वयोर्विधानात् । इह येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने क्रियमाणे छ्ठलादेः षित्वमनार्षमिति भ्रमः स्यादतो वार्त्तिककारः सर्वानेव पर्यजीगणत् ।

चरन्ति ॥ ८ ॥

तृतीयान्ताद्गच्छतिभक्षयतीत्येतयोरर्थयोष्ठक् स्यात् । हस्तिना शकटेन चरति हास्तिकः । शाकटिकः । दध्ना चरति दाधिकः ।

आकर्षात् ष्ठल् ॥ ९ ॥

ठकोऽपवादः । लः स्वरार्थः । आकर्षशब्देन सुवर्णपरीक्षार्थो निकषोपल उच्यते तेन चरति आकर्षिकः । आकर्षिकी । षित्वान्ङीष् । माधवस्तु भ्वादौ कषरवषेत्यादिदण्डको आकषात् ष्ठल् इति पाठमुदाजहार । तत्तु आकर्षात्पर्पादेरिति भाष्यवार्त्तिकाभ्यां सह विरुद्धम् । तत्र हि नीरेफपाठे वृत्ताननुगुणत्वं स्पष्टम् ।

पर्पादिभ्यः ष्ठन् ॥ १० ॥

पर्पेण चरति पर्पिकः । पर्पिकी । पर्प गतौ । पर्पत्यनेनेति पर्पः । हलश्चेति घञ् । येन पीठेन पङ्गवश्चरन्ति स पर्प इति माधवः । उज्वलदत्तस्तु खष्पशिल्पशष्पबाष्परूपतर्पतल्पा इति सूत्रे तर्पशब्दस्थाने पर्पशब्दं पठित्वापि सर्त्तेः पः पर्पं गृहं बालतृणश्च तेन चरति पर्पिक इत्युदाजहार । इहान्तर्गणसूत्रे पादः पच्चेति । पादाभ्यां चरति पदिकः यत्तु वार्त्तिकं पद्भाव इके चरतावुपसङ्ख्यानमिति सोऽस्यैव प्रपञ्चः । पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल पाद वृत् ।

श्वगणाट्ठञ् च ॥ ११ ॥

चात्ष्ठन् । ठकोऽपवादः । श्वगणेन चरति श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी । श्वादेरिञीत्यत्रेकारादिग्रहणं कर्त्तव्यमिति वचनाट्ठञि द्वारादिकार्यं न ।

वेतनादिभ्यो जीवति ॥ १२ ॥

वेतनेन जीवति वैतनिकः । धनुर्दण्डेति पठ्यते । तच्च सङ्घातविगृहीतार्थम् । तन्त्राष्टव्यादीनामन्यतमाश्रयणात् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ।

वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥

वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

आयुधाच्छ च ॥ १४ ॥

चाट्ठन् । आयुध्यन्त्यनेनेत्यायुधम् । घञर्थे कविधानमिति कः । आयुधेन जीवति आयुधीयः । आयुधिकः ।

हरत्युत्सङ्गादिभ्यः ॥ १५ ॥

एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे । उत्सङ्गेन हरति औत्सङ्गिकः । उत्सङ्ग उडुप उत्पत पिटक पिटाक ।

भस्त्रादिभ्यष्ठन् ॥ १६ ॥

भस्त्रया हरति भस्त्रिकः । षित्वान्ङीष् भस्त्रिकी । भस्त्रा चर्मविकारः । येन लोहादि ध्मायते जलादिकं च नीयते । शीर्षभारशब्दोऽत्र पठ्यते । निपातनाद् शीर्षभावः सप्तमीसमासश्च । तत्पुरुषे कृतीति वा अलुक् । पक्षे शीर्षभारः । एवमंसेभारः । अंसभारः ।

विभाषा विवधात् ॥ १७ ॥

तृतीयान्तादस्माद्धरत्यर्थे ष्ठन् वा स्यात् । पक्षे ठक् । विवधेन हरति विवधिकः । विवधिकी । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन् । वीवधिकः । वीवधिकी । ठकि प्राग्वत् । वीवधाच्चेति वक्तव्यमिति वार्त्तिकं दृष्ट्वा सूत्रेऽपि वीवधशब्दो वृत्तिकृता प्रक्षिप्तः वार्तिकं तु न्यायसिद्धार्थकथनपरम् । विवधवीवधशब्दौ पर्यायौ पथि पर्याहारे च वर्तेते इति वृत्तिकृतः । पर्याहारो नाम परित आह्रियतेऽनेन तण्डुलादिकमिति व्युत्प-

त्या उभयतो बद्धशिक्यः स्कन्धवाह्यः काष्ठविशेष उच्यते।

अण् कुटिलिकायाः ॥ १८ ॥

कुटिलिकया हरति मृगान् व्याधः कौटिलिकः। कुटिलिकया हरति अङ्गारान् कौटिलिकः कर्मारः। कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणभूतं लौहं च।

निर्वृत्ते ऽक्षद्यूतादिभ्यः ॥ १९ ॥

अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरम्।

त्रेर्मम्नित्यम् ॥ २० ॥

त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप् स्यात्। नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम्। अत एव लौकिके विग्रहवाक्ये क्त्रिन्नादीनां प्रयोगो न तु क्त्रेः। डुकृञ्। कृत्या निर्वृत्तं कृत्रिमम्। पक्त्रिमम्। उप्त्रिमम्। त्रिहित्रिमम्। संख्यावाची त्रिशब्दस्तु नेह गृह्यते व्याख्यानात्। प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणात्। निजां त्रयाणामित्यादिलिङ्गाच्च। ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां वाक्यस्य वारणेऽपि तदविवक्षायां स्वातन्त्र्यस्य दुर्वारत्वान्नेदं लिङ्गमिति चेन्न। नित्यमिति योगं विभज्य तत्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात्। भावप्रत्ययान्तादिमप् वक्तव्यः। पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। एवं च मप् न कर्तव्यः। तथाहि भावप्रत्ययान्तादिमप्। ततः त्रेः। पूर्वेण सिद्धे नियमार्थमिदम्। तेन निर्वृत्ते तावद्वाक्यं निवर्त्यते ततः नित्यम्। अनेनान्यत्रापि स्वातन्त्र्यं वार्यते एवं च संख्यावाचिग्रहणं सम्भवत्यपि न। भावप्रत्ययान्तादित्यनुवृत्तेः। स्वरेऽपि विशेषो नास्ति उदात्तनिवृत्तिस्वरेणेमप इकारस्योदात्तत्वात्।

अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥

अपमित्येति ल्यबन्तमव्ययम् । उदीचां माङ इति क्त्वा-प्रत्यय अपेत्यनेन सह गतिसमासात् । मयतेरिदन्यतरस्यामितीत्वम् । अतो नास्मात्तृतीयान्तात्प्रत्ययः किन्तु वचनात्प्रथमान्तादेव । अपमित्य निर्वृत्तं आपमित्यकम् । याचितेन निर्वृत्तं याचितकम् ।

संसृष्टे ॥ २२ ॥

दध्ना संसृष्टं दाधिकम् ।

चूर्णादिनिः ॥ २३ ॥

चूर्णैः संसृष्टाश्चूर्णिनो ऽपूपाः ।

लवणाल्लुक् ॥ २४ ॥

लवणेन संसृष्टो लवणः सूपः । लवणं शाकम् । लवणा यवागूः ।

मुद्गादण् ॥ २५ ॥

मुद्गैः संसृष्टो मौद्ग ओदनः ।

व्यञ्जनैरुपसिक्ते ॥ २६ ॥

दध्ना उपसिक्तं दाधिकम् । व्यज्यतेऽनेन ओदनादिरस इति व्यञ्जनम् । तद्वाचिना उपसिक्ते सिञ्चनेन मृदूकृत एव यथा स्यादिति नियमार्थमिदम् । तेनेह न सूपेन संसृष्टा स्थाली ।

ओजःसहोम्भसा वर्त्तते ॥ २७ ॥

ओजसा वर्तते औजसिकः शूरः । साहसिकश्चारः । आम्भसिको मत्स्यः ।

---

शब्द. तृतीय. 14.

## तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥

प्रत्यनुपूर्वमीपलोमकूलान्तं यत्प्रातिपदिकं तत्प्रकृतिका-द्वितीयान्ताद्वर्तत इत्यर्थे ठक् स्यात् । वृतेरकर्मकत्वेपि क्रिया-विशेषणत्वाद्द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः । ऋक् पूरित्यकारः स-मासान्तः द्व्यन्तरूपसर्गेभ्य इतीत्वम् । व्युत्पत्तिमात्रं चेदम् । प्रतिकूलानुकूलपर्य्यायौ हीमौ । एवं लोमकूलशब्दावप्यविवक्षि-तार्थावेव । रूढ्या योगापहारात् । ऊदनोर्देशे इत्यूत्वं तु नेह । अदेशत्वात् ।

## परिमुखं च ॥ २९ ॥

परिमुखं वर्तते पारिमुखिकः । चात्पारिपार्श्विकः । अपप-री वर्जन इति परेः कर्मप्रवचनीयता पञ्चम्यपाङ्परिभिरिति प-ञ्चमी । अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः । परिमुखं वर्तते इत्यर्थे ठक् । स्वामिनो मुखं वर्ज्जयित्वा यः सेवको वर्तते स पारिमुखिकः । यदा तु सर्वतो भावे परिशब्दः प्रादिसमासश्च तदा यतो यतः स्वामिनो मुखं ततो यो वर्त्तते सोऽर्थः । एवं पारिपार्श्विकोऽपि ।

## प्रयच्छति गर्ह्यम् ॥ ३० ॥

द्वितीयान्तात्प्रयच्छतीत्यर्थे ठक् स्यात् यत्प्रयच्छति गर्ह्यं चैतत् । द्विगुणार्थं द्विगुणम् । तात्स्थ्यात्ताच्छब्द्यं तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिक उत्तमर्णः । बहुवृद्ध्युद्देश्यकदानकर्म-तया गर्ह्यत्वम् । वृद्धेर्वृधुषिभावो वक्तव्यः । वृद्ध्यर्थं वृद्धिः तां प्रयच्छति वार्धुषिकः । अथ कथं वृद्ध्याजीवश्च वार्धुषिरित्यम-

र: । वार्धुषि: समकम्पयतेति । नस्तेन: स्यात्रवार्धुषी वार्धुष्यं लवणक्रियेति च । स्वच्छन्दवाचः कवय इति हरदत्तः । गर्ह्यं किम् । द्विगुणं वृद्धिं च प्रयच्छत्यधमर्णः ।

कुसीददशैकादशात्ष्ठन्ष्ठचौ ॥ ३१ ॥

आभ्यां गर्ह्यार्थाभ्यां यथासंख्यं ष्ठन्ष्ठचौ स्तः प्रयच्छतीत्यर्थे । कुसीदं वृद्धिस्तदर्थं द्रव्यमपि कुसीदं तत्प्रयच्छति कुसीदिकः । कुसीदिकी । एकादशार्था दशैकादशशब्देनोच्यन्ते तथा च विशेषणसमासः । एकादशार्थत्वादेकादश एकादश च ते वस्तुतो दश चेति विग्रहः । संख्याया अल्पीयस्या इति । पूर्वनिपातः । इहैव सूत्रे निर्देशादकारः समासान्तः । अत एव वाक्यमप्यकारान्तेन भवति । दशैकादशान् प्रयच्छति दशैकादशिकः । दशैकादशिकी । इहाप्युत्तमर्ण एव तद्धितार्थः ।

उञ्छति ॥ ३२ ॥

बदराण्युञ्छति बादरिकः । श्यामाकिकः । काणिकः । भूमौ पतितस्यैकैकस्योपादानमुञ्छः ।

रक्षति ॥ ३३ ॥

समाजं रक्षति सामाजिकः ।

शब्ददर्दुरं करोति ॥ ३४ ॥

शब्दं करोति प्रकृत्यादिविभागेन व्युत्पादयति शाब्दिकः । अभिधानस्वभावाद् व्युत्पादन एवायं प्रत्ययः । नेह शब्दं करोति वर्बरः । दार्दुरिकः कुलालः । दर्दुरशब्दः पात्रविशेषवाची । अनुकरणशब्द इत्येके ।

पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥

एभ्यो द्वितीयान्तेभ्यो हन्तीत्यर्थे ठक् स्यात् । स्वरूपस्य

पर्यायाणां विशेषाणां चेह ग्रहणम् । तत्र मत्स्यपर्यायेषु मीनस्यैव नेतरेषामिति स्वं रूपमित्यत्रोक्तम् । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मत्स्यस्य ङ्यामिति परिगणनात् सूर्यतिष्येति यलोपो न । मैनिकः । शाकलिकः । मार्गिकः । आरण्यकचतुष्पात्सु हरिणे च वृत्तेर्द्व्यर्थो मृगशब्दः । तत्राद्यस्य विशेषो द्वितीयस्य तु पर्यायो हरिणशब्दः । हारिणिकः ।

परिपन्थं च तिष्ठति ॥ ३६ ॥

अस्माद्द्वितीयान्तात्तिष्ठतीत्यर्थे ठक् स्यात् । परिपथशब्दः परिमुखवदव्ययीभावस्तत्पुरुषो वा । आद्ये क्रियाविशेषणत्वात्कर्मत्वम् । द्वितीये तु कालभावाध्वगन्तव्या इति । पन्थानं वर्जयित्वा व्याप्य वा स्थितः पारिपन्थिकश्चोरः । चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति । परिपन्थं हन्ति पारिपन्थिकः । नेदं प्रत्ययसंनियोगेन पन्थेतिनिपातनं किं तु परिपथमित्येतत्पर्यायभूतः परिपन्थशब्दोऽप्यस्ति परिशब्देन सह समासवृत्तेर्विषयीभूतः पन्थशब्दोऽस्तीति फलितोऽर्थः तेन ठकं विनापि परिपन्थं तिष्ठतीति लौकिकः प्रयोग उपपद्यते । एतदेव सूत्रयितुं तदिति प्रकृतमपि पुनर्द्वितीयोच्चारणं कृतमिति वृत्तिकाराः ।

माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

माथशब्दः पथिपर्यायः । मथ्यतेऽवगाह्यते गन्तृभिरिति व्युत्पत्तेः । दण्डाकारो माथो दडमाथः दण्डमाथं धावति दाण्डमाथिकः । पादविकः । आनुपदिकः ।

आक्रन्दाट्ठञ् च ॥ ३८ ॥

अस्माट्ठञ्स्यात्चाट्ठक् धावतीत्यर्थे । स्वरे भेदः । आक्रन्दं-

त्यस्मिन्नित्याक्रन्दो देशः दुःखितानां रोदनस्थानम् । आक्रन्दं धावति आक्रन्दिकः ।

पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः । पदान्तादिति तु नोक्तम् । बहुच्पूर्वान्मा भूत् ।

प्रतिकण्ठार्थललामं च ॥ ४० ॥

एभ्यो गृह्णात्यर्थे ठक्स्यात् । कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः । लक्षणेनाभिप्रती इति वा । यस्तु प्रतिगतः कण्ठमिति प्रादिसमासस्तस्येह न ग्रहणं व्याख्यानात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।

धर्मं चरति ॥ ४१ ॥

धर्मशब्दाट्ठक् स्याच्चरत्यर्थे । चरतिरिहासेवायां न त्वनुष्ठानमात्रे । तेन दैवत्रशाद्धर्मे प्रवृत्तोऽपि दुर्वृत्तो धार्मिक इति नोच्यते । आसेवा हि स्वारसिकी प्रवृत्तिः । अधर्माच्चेति वक्तव्यम् । आधर्मिकः ।

प्रतिपथमेति ठञ् च ॥ ४२ ॥

वीप्सायामाभिमुख्ये वाऽव्ययीभावः । ऋक्पूरिति समासान्तः । प्रतिपथमेति प्रातिपथिकः । प्रातिपथिकी ।

समवायान्त्समवैति ॥ ४३ ॥

समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात् समवैतीत्यर्थे । सामवायिकः । सामूहिकः । सांनिवेशिकः । इह समवपूर्वस्येणोऽर्थः प्रविश्यैकदेशीभवनम् । तत्र गुणभूतं प्रवेशं प्रति प्रकृत्यर्थस्य

कर्मता बोध्या । विशेष्यानुरोधेन तु लोके सप्तमी प्रायशः प्रयुज्यते । कुरुक्षेत्रे समवेता इति ।

परिषदो ण्यः ॥ ४४ ॥

समवायान् समवैतीत्यर्थे परिषदं समवैति पारिषद्यः ।

सेनाया वा ण्यः ॥ ४५ ॥

पक्षेठक् सैन्याः । सैनिकाः ।

संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४६ ॥

ललाटकुक्कुटीशब्दाभ्यां पश्यतीत्यर्थे ठक् स्यात् संज्ञायाम् । संज्ञानं संज्ञा प्रतिपत्तिः प्रसिद्धिरिति यावत् । प्रसिद्ध्यनुसारो योगो ग्राह्यो न तु स्वेच्छयेत्यर्थः । लालाटिकः सेवकः । द्वारे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः । लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च य इत्यमरः । वदान्योऽपि कथं दद्याल्लालाटिक्यै ललाटिकामिति लक्ष्यम् । कौक्कुटिको भिक्षुः । संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छति । कुक्कुटीशब्देन तत्पाताईः स्वल्पदेशो लक्ष्यते । तथा चाल्पमेव देशं पश्यन् कौक्कुटिक उच्यते । इदमेव विषयविभागं सूचयितुं संज्ञायामित्युक्तम् ।

तस्य धर्म्यम् ॥ ४७ ॥

आपणस्य धर्म्यमापणिकः ।

अण् महिष्यादिभ्यः ॥ ४८ ॥

महिष्या धर्म्यं माहिषम् । याजमानम् । हौत्रम् ।

ऋतोऽञ् ॥ ४९ ॥

यातुर्धर्म्यं यात्रम् । नराच्चेति वक्तव्यम् । नरस्य धर्म्या

नारी। विशसितुरिड्लोपश्चाञ् च वक्तव्यः। विशसितुर्धर्म्यं वैशस्त्रम्। विभाजयितुर्णिलोपश्चाञ् च वक्तव्यः। विभाजयितुर्धर्म्यं वैभाजित्रम्।

अवक्रयः ॥ ५० ॥

षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे। आपणस्यावक्रय आपणिकः। धर्मोऽनुवृत्त आचारस्तस्मादनपेतं धर्म्यम्। अवक्रयस्तु लोभात्प्रवर्तित इति भेदः। स्वद्रव्यपरित्यागपूर्वकं परद्रव्यस्य स्वीकारो हि क्रयः तस्यावमत्वमवशब्देन द्योत्यते, वाणिज्यार्थं तैलधानादिकं देशान्तरं नयतास्मिन् शुल्कस्थाने प्रतिभारमेतावद्देयं तथा इदं विक्रीणानेन राज्ञे एतावद्देयमिति तद्देशाधिपतिना यत्कल्प्यते सोऽवक्रयः पिण्डक इति वोच्यते। तत्र स्वद्रव्यमेव दत्वा स्वद्रव्यान्तरस्य स्वीकाराक्रयस्यावमत्वम्। सूत्रे च क्रीयतेऽनेनेति करणे एरच्। तेन राजग्राह्यं द्रव्यं ठगर्थः।

तस्य पण्यम् ॥ ५१ ॥

अपूपाः पण्यमस्य आपूपिकः। शाष्कुलिकः।

लवणाट्ठञ् ॥ ५२ ॥

लवणं पण्यमस्य लावणिकः।

किसरादिभ्यः ष्ठन् ॥ ५३ ॥

किसरं पण्यमस्य किसरिकः। किसरिकी। किसर नरद नलद स्थगल तगर गुग्गुलु उशीर हरिद्रा हरिद्रुपर्णी। किसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः।

शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

ष्ठन्स्यात्। पक्षे ठक्। शलालुकः। शलालुकी। शालालुकः। शालालुकी। शलालुः सुगन्धिद्रव्यविशेषः।

शिल्पम् ॥ ५५ ॥

तदस्येत्यनुवर्तते । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । मृदङ्गवादनादौ लाक्षणिकी प्रकृतिः । मुख्यार्थे वृत्तेस्त्वनभिधानान्न । शिल्पं कौशलं तच्च मृदङ्गवादनादिविषयके । तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः ।

मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥

मड्डुकवादनं शिल्पमस्य माड्डुकः । माड्डुकिकः । झार्झरः । झार्झरिकः । इदमेव सूत्रं ज्ञापकं तत्सम्बद्धक्रियाविषये लाक्षणिकेभ्यः शिल्पप्रत्यय इति । मड्डुकझर्झरयोर्मुख्यार्थस्य शिल्पेन सामानाधिकरण्यायोगात् ।

प्रहरणम् ॥ ५७ ॥

तदस्येत्येव । असिः प्रहरणमस्यासिकः । चाक्रिकः । धानुष्कः । इणः ष इति विसर्जनीयस्य षः ।

परश्वधाट्ठञ् च ॥ ५८ ॥

चाट्ठक् । परश्वधः प्रहरणमस्य पारश्वधिकः । द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।

शक्तियष्ट्योरीकक् ॥ ५९ ॥

शक्तिः प्रहरणमस्य शाक्तिकः । याष्टीकः ।

अस्ति नास्ति दिष्टं मतिः ॥ ६० ॥

तदस्येत्येव । अस्ति परलोक इत्येवं रूपा मतिर्यस्य स आस्तिकः । तद्विपरीतो नास्तिकः । दैवं दिष्टं भागधेयम् । दिष्टमिति मतिर्यस्य स दैष्टिकः । अस्तिनास्तिशब्दौ निपातौ ।

यद्वा वचनसामर्थ्यादस्तीत्याख्यातान्निपाताख्यातसमुदायाच्च प्रत्ययः । प्रमाणानुमा मतिर्दिष्टेति प्रक्रिया तु प्रामादिकी । दिष्टशब्दस्यादृष्टपर्यायत्वात् । क्लीबत्वाच्च । नालम्बते दैष्टिकतामिति माघः ।

शीलम् ॥ ६० ॥

तदस्येत्येव । अपूपभक्षणं शीलमस्यापूपिकः ।

छत्रादिभ्यो णः ॥ ६१ ॥

छत्रं शीलमस्य छात्रः । छत्रमाच्छादनं गुरोर्दोषाणामावरणमिति यावत् ।

कर्माध्ययने वृत्तम् ॥ ६२ ॥

तदस्येत्येव । प्रथमान्तात्षष्ठ्यर्थे ठक् स्यात् । अध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । ऐकान्यिकः । द्वैयन्यिकः । एकमन्यादिति विगृह्य तद्धितार्थ इति समासः । ततष्ठक् । यस्याध्ययने परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं स ऐकान्यिकः । एवं द्वैयन्यिकः । त्रैयन्यिकः ।

बह्वच्पूर्वपदाट्ठच् ॥ ६३ ॥

प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । त्रयोदशापपाठा अस्य जाता इत्यर्थः ।

हितं भक्षाः ॥ ६४ ॥

अस्येति प्रकृतमपि चतुर्थ्या विपरिणम्यते हितयोगात् । अपूपभक्षणं हितमस्मै आपूपिकः ।

तदस्मै दीयते नियुक्तम् ॥ ६५ ॥

नियुक्तमव्यभिचरितम् । अग्रभोजनमस्मै नियुक्तं दीयते

आग्रभोजनिकः ।

श्राणामांसौदनाट्टिठन् ॥ ६६ ॥

उक्तेऽर्थे। इकार उच्चारणार्थः। टो ङीबर्थः। श्राणा नियुक्तं दीयतेऽस्मै श्राणिकः। श्राणिकी। यवागूरुष्णिका श्राणा विलेपी तरला च सेत्यमरः। मांसौदनिकः। मांसौदनिकी। मांसौदनग्रहणं संघातविगृहीतार्थमित्येके । युक्तं चैतत्। प्रत्ययान्तरारम्भसामर्थ्यात् । ओदनिक इत्यत्र वृद्धिवारणेन हि टिठन् सार्थकः। अन्यथा ठञैव सिद्धौ किं तेन ।

भक्तादणन्यतरस्याम् ॥ ६७ ॥

पक्षे ठक्। भक्तमस्मै नियुक्तं दीयते भाक्तः। भाक्तिकः।

तत्र नियुक्तः ॥ ६८ ॥

आकरे नियुक्त आकरिकः ।

अगारान्तात् ठन् ॥ ६९ ॥

देवागारे नियुक्तो देवागारिकः ।

अध्यायिन्यदेशकालात् ॥ ७० ॥

तत्रेत्येव । निषिद्धदेशकालवाचकाट्ठक् स्यात्। श्मशानेऽधीते श्माशानिकः। चतुर्दश्यामधीते चातुर्दशिकः। आमावास्यिकः। अदेशकालात्किम्। काश्यां पूर्वाह्णेऽधीते।

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७१ ॥

तत्रेत्येव। क्रियातत्त्वे चायं व्यवहरतिर्वर्तते । वंशकठिने व्यवहरति वांशकठिनिकः। वंशा वेणवः कठिना अस्मिन्देशे स वंशकठिनः। तस्मिन् देशे या क्रिया यथानुष्ठेया तां तथैवानु-

तिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः । प्रस्तारसंस्थानशब्दौ सन्निवेशपर्यायौ ।

निकटे वसति ॥ ७१ ॥

निकटशब्दात्सप्तम्यन्ताट्ठक् स्याद्वसतीत्यर्थे । नैकटिको भिक्षुः ।

आवसथात्ष्ठल् ॥ ७३ ॥

वसतीत्यर्थे । आवसन्त्यस्मिन्नित्यावसथः । उपसर्गे वसेरित्यथप्रत्ययः । आवसथे वसत्यावसथिकः । षित्वान् ङीष् । आवसथिकी । समाप्तोऽस्य ठकोऽवधिः ।

प्राग्घिताद्यत् ॥ ७४ ॥

तस्मै हितमित्यतः प्राक् यदधिक्रियते ।

तद्वहति रथयुगप्रासङ्गम् ॥ ७५ ॥

रथ्यः । युगं रथाङ्गं वहति युग्यः । वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः । प्रासज्यतेऽसाविति कर्मणि घञ् तं वहति प्रासङ्ग्यः ।

धुरो यड्ढकौ ॥ ७६ ॥

इह धुरो ढक् चेत्येव सुवचम् । धुरं वहति धुर्यः । धौरेयः । धुर्वी हिंसायाम् । भ्राजभासेति क्विप् । राल्लोपः धूः । यति तु न भकुर्छुरामिति निषेधाद्धलि चेति दीर्घो न । इह ढग् विधीयते न तु ढञ् । धौरेयो लोहिताभांशुरिति दृश्यते । धौरेयक इति तु स्वार्थे कनि बोध्यम् ।

खः सर्वधुरात् ॥ ७७ ॥

शब्दस्वरूपापेक्षया नपुंसकनिर्देशो बन्धुनि बहुव्रीहाविति

वत् । सर्वा धूः सर्वधुरा । पूर्वकालैकेति तत्पुरुषे ऋक्पूरिति समासान्तः परवल्लिङ्गमिति स्त्रीत्वादाप् । सर्वधुरां वहति सर्वधुरीणः । ख इति योगविभाग इष्टसिद्ध्यर्थः कर्तव्य इति वृत्तिः । दाक्षिणां धुरं वहतीति तद्धितार्थे समासे ततः समासान्तेऽकारे टापि च खः । दक्षिणधुरीणः । एवमुत्तरधुरीणः ।

एकधुराल्लुक् च ॥ ७८ ॥

एकधुरं वहतीति एकधुरीणः । एकधुरः । चकारेण खस्यानुकरणसामर्थ्यात्पक्षे श्रवणम् । अन्यथा हि चकारं विनैव प्राकरणिकस्य यतो लुग्विधीयेत ।

शकटादण् ॥ ७९ ॥

शकटं वहति शाकटो गौः । ननु तस्येदमित्यणा सिद्धं यो हि शकटं वहति शकटस्यासौ भवति । अत्राहुः । आरम्भसामर्थ्यात्तदन्तविधिः । तेन द्वे शकटं वहति द्वैशकाटिकः । प्राग्दीव्यतीयो लुङ् न ।

हलसीरात् ठक् ॥ ८० ॥

हलं वहति हालिकः । सैरिकः । ननु तस्येदं हलसीराट्ठगिति शैषिकेणैव सिद्धम् । सत्यम् । आरम्भसामर्थ्यादिहापि तदन्तविधिः । द्वैहालिकः ।

संज्ञायां जन्या ॥ ८१ ॥

जनी वधूः जायतेऽस्यां गर्भ इति जनिघसिभ्यामिण् । जनिवध्योश्चेति वृद्धिप्रतिषेधे कृदिकारादिति ङीष् । जनीं वहतीति जन्या जामातुर्वयस्या । सा हि प्रणयकलहादौ वधूं जामातुः समीपं प्रापयति । कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त । यातेति जन्यामवदत् कुमारीति ।

त्रिध्यत्यधनुषा ॥ ८२ ॥

द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः करणम् । पादौ विध्यन्ति पथ्याः शर्कराः । पथ्यत्यतदर्थ इति पद्भावः । उरुयाः कण्टकाः । अधनुषा किम् । चोरं विध्यति । सम्भाव्यते हि चोरव्यधने धनुषः करणता यदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वेनासामर्थ्यादेव न भवति तद्धितवाच्यायाः क्रियायाः गुणीभावेन भवति वै प्रधानस्येति न्यायस्येहानवतारत् । न चात्राविग्रहा गतादिस्थेति न्याय आश्रयितुं शक्यः धातूपात्तक्रियायामेव तथा व्युत्पत्तेः । अत एव कण्टकैः पादौ विध्यतीत्यादौ न भवतीति वृत्तिमतम् । भाष्ये त्वधनुषेति प्रत्याख्यातम् । चोरं विध्यतीत्यत्र तु अनभिधानान्नेति दिक् ।

धनगणं लब्धा ॥ ८३ ॥

तृन्नन्तमेतत् । धनं लब्धा धन्यः । गणं लब्धा गण्यः ।

अन्नाराणः ॥ ८४ ॥

अन्नं लब्धा आन्नः ।

वशं गतः ॥ ८५ ॥

वशनं वशः इच्छा । वशिरण्योरुपसंख्यानमित्यप् । वशं गतो वश्यः । परेच्छानुसारीत्यर्थः ।

पदमस्मिन् दृश्यम् ॥ ८६ ॥

शक्यर्थे ऋदुपधादिति क्यप् । पदं दृश्यमास्मिन्पद्यः कर्दमः । पद्याः पांसवः । नातिद्रवो नातिशुष्कः कर्दमः पद्य उच्यते । नात्यल्पा नातिबहुलाः पांसवोऽपि तथोरिताः ।

मूलमस्याबर्हि ॥ ८७ ॥

प्रथमान्तादाबर्हीत्युपाधिकान्मूलशब्दाद्यत्स्यात् । बृह उद्यमने । दन्त्योष्ठ्यादिरयं न तु पवर्गादिः । उद्वृह रक्षः सह मूलमिन्द्रम् । जह्यमुष्णीण्यवृहात्वणत् इत्यादिदर्शनात् । आवर्हणमावर्हः । उत्पाटनम् । आवर्होऽस्यास्तीत्यावर्हि मूलमावर्हि येषां ते मुल्या मुद्गाः । मूलोत्पाटनं विना संग्रहीतुमशक्याः । मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः । सुष्ठु शुष्का इति यावत् ।

संज्ञायां धेनुष्या ॥ ८८ ॥

धेनुशब्दस्य पुगागमो यप्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम् धेनुष्याशब्दोऽन्तोदात्तः । यति तु तित्स्वरः स्यात् । ऋणप्रदानाय धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् । पीतदुग्धेति सैवोच्यते । धेनुष्या बन्धके स्थितेत्यमरः ।

गृहपतिना संयुक्ते ञ्यः ॥ ८९ ॥

गृहपतिर्यजमानः तेन संयुक्तो गार्हपत्योऽग्निः । संज्ञायामित्यनुवृत्तेराहवनीयादावतिप्रसङ्गो न । यद्वा गृहपतिर्नामाग्निविशेषः । तेन संयोगो गार्हपत्यस्यैव । अग्निहोत्रे हि गार्हपतये हूयते । पत्नीसंयाजेषु च स तत्रेज्यते । अत्रापि गृहपतिरग्निरेव गृह्यते न तु यजमान इत्यत्र संज्ञाधिकार एव शरणम् ।

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ९०

नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात् । तार्यादियोगे हि यथासम्भवं करणे कर्त्तरि हेतौ तु-

त्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते । अत्र प्रथममूलान्तानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह महाद्वन्द्वः । मूलान्तानान्द्वित्राणां वा मूलादीनामेव वा कृत्वेति दिक् । तेन सारूप्याभावादेकशेषो न । नात्रा तार्यं नाव्यम् । शक्यार्थे ऋहलोर्ण्यत् । करणे तृतीया । वयसा तुल्यो वयस्यः । संज्ञाधिकारान्नेह । वयसा तुल्यः शत्रुः ! धर्मेण प्राप्यं धर्म्यं फलम् । ननु धर्मादनपेत इति वक्ष्यमाणेन सिद्धम् । मैवम् । यद्धि धर्ममनुवर्तते तत्तस्मादनपेतम् । फलं तु धर्मविरोधि । धर्मस्य फलनाश्यत्वात् । विषेण वध्यो विष्यः । विषेण वधमर्हतीत्यर्थः । दण्डादिभ्य इति सूत्रेण वधशब्दादर्हार्थे यद्विधानात् । तत्र हि शीर्षच्छेदाद्यच्चेति पूर्वसूत्राद्यदनुवर्तत इति पञ्चमे वक्ष्यते । मूलेनायाम्यं मूल्यं लाभाख्यद्रव्यम् । तथाहि मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम् । तेन स्वस्मादतिरिक्तं लाभाख्यं द्रव्यं शेषीक्रियते आत्मन उपकारकं क्रियते । आङ्पूर्वकश्च नमिरभिभवे वर्तते तस्मात्पोरदुपधादिति यति प्राप्ते अत एव निपातनाण्यत् । आयाम्यमभीभवनीयं आत्मानं प्रति शेषीकर्तव्यम् । स च लाभाख्यो भाग एव लोके तु यावता द्रव्येण पटादिकं क्रियते तत्रैव समुदाये मूलशब्दः प्रसिद्धः न तु मूलातिरिक्तभागमात्रे । तत्र मूल्यशब्दस्य तद्धटिते सङ्के लक्षणैव । एतेन यत्र दायप्रतिग्रहादिलब्धे क्षेत्रे विक्रीयमाणे मूल्यं नास्ति तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगो व्याख्यातः । लक्षितलक्षणाभ्युपगमात् । मूलेन समो मुल्यः पटः । उपादानेन समानफल इत्यर्थः । सीतया समितं सीत्यं क्षेत्रम् । सीता हलाग्रम् । सम्पूर्वादिणः क्तः । समितं सङ्गते निम्नोन्नतादिरहितं कृतमि-

स्यर्थः । समीकृतमिति यावत् । रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः । परमसीत्यम् । द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत् द्विसीत्यम् । तुलया समितं तुल्यम् । संमितं सदृशम् । यथा तुला परिमेयं परिच्छिनत्ति एवं तुल्यमपि प्रतियोगिनं सादृश्येन परिच्छिनत्तीत्यर्थः । रूढिश्चेयम् । संज्ञायामित्यधिकारात् ।

धर्मपथ्यर्थन्यायादनपेते ॥ ९१ ॥

धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । संज्ञाधिकारादभिधेयनियमः । तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यं न तु मार्गादनपेतश्चोरोऽपि ।

छन्दसो निर्मिते ॥ ९२ ॥

तृतीयान्ताच्छन्दसो यत्स्यान्निर्मिते । छदि संवरण इति चुरादेर्धातूनामनेकार्थतया इच्छापर्यायोऽयं छन्दःशब्दोऽसुन्नन्तः घञन्तस्तु प्रसिद्ध एव । स्वच्छन्दोच्छ ऽइच्छकच्छेत्यादौ । वेदवाची त्रिष्टुबादिवाची च सान्त इह न गृह्यते संज्ञाधिकारात् । तत्र निर्माणे इछायाः करणत्वात्सामर्थ्यात्तृतीयान्तादिति लभ्यते । छन्दसा निर्मितं छन्दस्यम् । इछया कृतमित्यर्थः ।

उरसोऽण् च ॥ ९३ ॥

चाद्यत् । उरसा निर्मितः पुत्र औरसः । उरस्यः । संज्ञाधिकारान्नेह । उरसा निर्मितं सुखम् ।

हृदयस्य प्रियः ॥ ९४ ॥

हृदयशब्दात्षष्ठ्यन्ताद्यत्स्यात्प्रीतिकरेऽर्थे । हृद्यो देशः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदादेशः ।

बन्धने चर्षौ ॥ ९५ ॥

हृदयशब्दात्षष्ठयन्ताद्बन्धने यत् स्यादृषावभिधेये । ऋषिरिह वेदः तदुक्तमृषिणेत्यादौ तथा दर्शनात् । हृदयस्य बन्धनो हृद्यो वशीकरणमन्त्रः । तेन हि परहृदयं बध्यते । कृद्योगलक्षणा कर्मणि षष्ठी हृदयस्येति । अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादेव । संज्ञाधिकाराद्वासिष्ठादावृषौ नायं यत् ।

मतजनहलात्करणजल्पकर्षेषु ॥ ९६ ॥

मतं ज्ञानं तस्य करणं भावः साधनं वा मत्यम् । कर्मणि षष्ठी । ततो यत् । जल्पशब्दो भावसाधनः कर्तरि षष्ठी । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । कर्षशब्दो नेह परिमाणार्थः किन्तु क्रियाशब्दः संज्ञाधिकाराद्धलसम्बन्धाच्च । हलस्येति कर्मणि षष्ठी करणस्य कर्तृत्वविवक्षायां कर्तरि वा । रथसीताहलेभ्य इति तदन्तविधिः । द्विहल्यः । त्रिहल्यः ।

तत्र साधुः ॥ ९७ ॥

सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । साधुरिह प्रवीणो योग्यो वा गृह्यते । तदुपकारकोऽपि । संज्ञाधिकारात् ।

प्रतिजनादिभ्यः खञ् ॥ ९८ ॥

जनो जन इति प्रतिजनम् । यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः । तत्र साधुः प्रातिजनीनः । प्रतिजन । इदंयुग । संयुग । पापकुल । परस्यकुल । अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । परस्यामुष्येति षष्ठ्या निपातनादलुक् ।

भक्ताराणः ॥ ९९ ॥

भक्ते साधवो भाक्ताः शालयः।

परिषदो ण्यः ॥ १०० ॥

परिषदि साधुः पारिषद्यः। परिषद इति योगविभागाण्णोऽपि। तथा च भाष्यं प्रयुक्तम्। पारिषदकृतिरेषा तत्र भवतामिति। सर्ववेदपारिषदं शास्त्रमिति च। पार्षदमिति पाठे पृषोदरादित्वादिकारलोपः।

कथादिभ्यष्ठक् ॥ १०१ ॥

कथायां साधुः काथिकः।

गुडादिभ्यष्ठञ् ॥ १०२ ॥

गुडे साधुर्गौडिक इक्षुः। कौल्माषिको मुद्गः। साक्तुको यवः। गुड। कुल्माष। सक्तु। अपूप। मांस। ओदन। इक्षु। वेणु। संघात। प्रवास। निवास।

पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०३ ॥

पथि साधुः पाथेयः। आतिथेयः। वसनं वसतिः। वसेश्चेत्यतिप्रत्ययः। तत्र साधुर्वासतेयी रात्रिः। स्वस्य पतिः स्वपतिराढ्यः तस्य योग्यं स्वापतेयं धनम्।

सभाया यः ॥ १०४ ॥

सभायां साधुः सभ्यः। अन्तोदात्तः। यति तु तित्स्वरः स्यात्। क्रतुर्भवत्युक्थ्य इति वत्। द्व्यच्कत्वेऽपि हि तत्र यतोनाव इति न भवति। यस्येतिलोपात्प्राक् ऽयच्त्वात्। यदुत्पत्तिवेलायां त्र्यच्त्वस्य वेदभाष्ये स्थापितत्वात्। पक्षान्तरे तु नमः सभ्याय च कृत्स्नाय चेत्यादिवदाद्युदात्तः।

ढश्छन्दसि ॥ १०५ ॥

सभेयो युवा ।

समानतीर्थे वासी ॥ १०६ ॥

साधुरिति निवृत्तम् । वासीति प्रत्ययार्थः । वसतीति वासी । निपातनाण्णिनिः । ग्रहादेराकृतिगणत्वाद्वा । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः । तीर्थे ये इति समानस्य सभावः । तरन्त्यनेनेति तीर्थम् । तरतेस्थक् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारे चेति विश्वः । इह त्वध्यापकवाचिन एव ग्रहणं नान्यस्य । संज्ञाधिकारात् ।

समानोदरे शयित ओ चोदात्तः ॥ १०७ ॥

समानोदरे शयितः स्थितः समानोदर्यो भ्राता । शेतिर्हि स्थितौ दृष्टः जलाशय कुशेशयमिति यथा । समानमुदरमिति पूर्वापरप्रथमेत्यादिना कर्मधारयः । ततो यत् । तित्स्वरापवाद औचोदात्तः ।

सोदराद्यः ॥ १०८ ॥

औ चोदात्त इति नानुवर्त्तते । विभाषोदर इति सभावः । तत्र तीर्थे य इत्यतोनुवृत्ते ये इत्येतद्विषयसप्तमीपरतया व्याख्यास्यते । तेन सोदर इत्यस्मात् यः । सोदर्यः । समानोदरे शयित इत्येवार्थः । प्रत्ययस्वरः । कथं तर्हि अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चतीति मुरारिः । उच्यते । सह समानम् उदरं यस्येति वोपसर्जनस्येति सभावः । अत एव यत्र भ्राता सहोदर इत्यपि सिद्धम् ।

भवे छन्दसि ॥ १०९ ॥

सप्तम्यन्ताद्भवार्थे यत्स्याच्छन्दसि । मेध्याय च विद्युत्याय

च । यथायथं शैषिकाणामणादीनां घादीनां चापवादोयं यत् । पक्षे तेऽपि भवन्ति । सर्वविधिनां छन्दसि वैकल्पिकत्वात् तद्यथा । मुञ्जवान्नाम पर्वतः । तत्र भवः । मौञ्जवतः । सोमस्येव मौञ्जवतस्य भक्षः । आपादसमाप्तेश्छन्दोऽधिकारः ।

पाथोनदीभ्यां ड्यण् ॥ ११० ॥

तमु त्वा पाथ्यो वृषा । चनोदधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्यां भवो नाद्यः । पाथोन्तारिक्षमिति वृत्तिकाराः । पाति भूतान्यवकाशदानेनेति व्युत्पत्तेः । यद्यपि पातेर्जले जुट् च उदके थुट् अन्ने चेति अत्रोदकयोः पाथःशब्दो व्युत्पाद्यते तथापि बाहुलकादन्तारिक्षेऽपीति भावः ।

वेशन्तहिमवद्भ्यामण् ॥ १११ ॥

वेशन्तः पल्वलम् । विशेर्झच् । तत्र भवा आपो वैशन्त्यः । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ।

स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११२ ॥

पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः । स्रोतस्यः ।

सगर्भसयूथसनुताद्यत् ॥ ११३ ॥

अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । योनः सनुत्य उत वा जिगत्नुः । नुतिर्नुतम् । नपुंसके भावे क्तः । सगर्भादयस्त्रयोऽपि कर्मधारयाः । सर्वत्र समानस्य छन्दसीति सभावः ततो भवार्थे यत् । यतोऽपवादः ।

तुग्राद्घन् ॥ ११४ ॥

भवार्थे । पक्षे यदपि छान्दसत्वात् । आवः शयं वृषमन्तु-

ग्र्यास्त्विति बह्वृचः । तुग्रियास्त्विति तु शाखान्तरे । धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः ।

अग्राद्यत् ॥ ११५ ॥

अग्रे भवमग्र्यम् । भवे छन्दसीत्येव सिद्धे यच्छयान्भिर्बाधा मा भूदिति यद्विधीयते ।

घछौ च ॥ ११६ ॥

चकारोऽव्यवहितं घनं समुच्चिनोति नतु संनिहितमपि यतम् । पूर्वेणैव तत्सिद्धेः । अग्रियः । अन्तोदात्त आद्युदात्तश्च । अग्रीयः । लोके त्वाग्रिम इत्येव । कथं तर्हि एतच्छुभं विजानीहि ब्राह्मणाग्र्यस्य लक्षणमिति । छन्दोवदृषयः कुर्वन्तीति प्राञ्चः । वस्तुतस्तु साध्वर्थे यत् । शाखादित्वादिवार्थे य इति वा ।

समुद्राभ्राद्घः ॥ ११७ ॥

समुद्रिया अप्सरसो मनीषिणाम् । नानदतो अभ्रियस्येव घोषाः ।

बर्हिषि दत्तम् ॥ ११८ ॥

भव इति निवृत्तम् । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः वृंहेर्नलोपश्च । बर्हिः कुशहुताशयोः । बर्हिष्येषु निधिषु प्रियेषु ॥

दूतस्य भागकर्मणी ॥ ११९ ॥

भागोंऽशः । कर्म क्रिया । यदग्ने यासि दूत्यम् । भागे तस्येदमित्यणि प्राप्ते वचनम् । कर्मणि तु दूतवणिग्भ्यामित्यौपसंख्यानिके ये प्राप्ते ॥

रक्षोयातूनां हननी ॥ १२० ॥

षष्ठीबहुवचनम् । ताभ्यां रक्षःशब्दयातुशब्दाभ्यां हननकरणभूतेत्यर्थे यत्स्यात् छन्दसि । कृद्योगे कर्मणि षष्ठी । याते अग्ने

रक्षस्या तनू । यातव्या । रक्षसां यातूनां च हननीति विग्रहः । बहुवचनान्ताद्विधानं स्तुत्यर्थम् । बहूनां रक्षसां हननेन स्तुतिप्रतीतेः । नैऋतो यातुरक्षसीत्यमरः । सूत्रे विरूपाणामपीत्येकशेषस्तु न भवति । शब्दस्वरूपपरतया भिन्नार्थत्वात् । शैषिकयोरण्छयोरपवादोऽयं योगः ।

रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२१ ॥

आभ्यां यत्स्यात्प्रशंसने । शंसु स्तुतावित्यस्मात् कृत्यल्युटो बहुलमिति भावे क्यप् । तद्योगे कर्मणि षष्ठी । रयिरस्त्यस्या रेवती । रयेर्मतौ बहुलमिति सम्प्रसारणम् । जगच्छब्दात् छतृवद्भावान्ङीप् । हविषे हिता हविष्या । उगवादिभ्यो यत् । तासां प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् । यस्येतिलोपे कृते हलो यमां यमि लोपः ।

असुरस्य स्वम् ॥ १२२ ॥

अणोऽपवादः । असुर्यं देवेभिर्धायि विश्वम् ।

मायायामण् ॥ १२३ ॥

असुरशब्दात्षष्ठ्यन्तान्मायायामण् स्यात् । पूर्वसूत्रापवादः । आसुरी माया स्वधया कृतासि ।

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः॥१२४॥

मत्वन्तप्रकृतिकात्प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकादासामिष्टकानामितीष्टकारूपे सम्बन्धिनि यत्स्यात् मतोश्च लुक् । वर्चः शब्दोऽस्मिन्निति वर्चस्वान् । चयनेऽङ्गभूतो मन्त्रः । स च देवस्य त्वा सवितुः प्रसव इत्यादिकः । स उपधीयन्तेऽनेनेत्युपधानो यासामिष्टकानां ता वर्चस्याः । वर्चस्या उपदधातीति हि श्रूयते । यद्यपि तस्मिन्मन्त्रे पदान्तराणि सन्ति त-

थापि तत्प्रकृतिकमतुपि प्रत्ययो नापादनीयः । छन्दोऽधिकारात् । तत्र हि सिद्धस्यानुशासनं न तु काव्यादिवत् अपूर्वोत्प्रेक्षासम्भवः एवं चेह इतिशब्दादिकं स्पष्टार्थमित्यवधेयम् । एवं तेजस्याः । ऋतव्याः । अथ कथं सृष्टीरुपदधाति प्राणभृत उपदधातीति । सृष्ट्याः प्राणभृत्या इति हि प्राप्नोति । सत्यम् । सृष्ट्यादिशब्दानां तद्वन्मन्त्रोपधेयास्विष्टकासूपचारात्प्रयोगः न तु तद्धितान्तमेतदित्यवधेहि । पूर्वोत्तरमीमांसयोस्तु तद्धितपरतया प्रतीयमाना ग्रन्था भङ्क्त्वानेयाः ।

## अश्विमानण् ॥ १२५ ॥

अश्विमच्छब्दात्प्रागुक्तेऽर्थेऽण् स्याद्यतोपवादः मतोर्लुक् च । इनण्यनपत्य इति प्रकृतिभावः । अश्विनीरुपदधाति । अश्विन्शब्दवान्मन्त्र उपधानो यासामिष्टकानान्ता इत्यर्थः ।

## वयस्यासु मूर्ध्नो मतुप् ॥ १२६ ॥

तद्वानासामिति सूत्रं सर्वमनुवर्त्तते । तत्र मतोरिति पदमावर्त्य पञ्चम्यन्ततया व्याख्यायते । मूर्धशब्दप्रकृतिको यो मतुप् तदन्तप्रकृतिकात्प्रथमान्तान्मतुप् स्यात् । यतोऽपवादः । प्रकृत्यन्तर्गतस्य मतोर्लुक् च । वयःशब्दवन्मन्त्रोपधेयास्विष्टकासु वाच्यासु । मुर्धन्वतीरुपदधाति । अनोनुडिति नुडागमः । वयःशब्दवन्मन्त्रोपधेयत्वाद्वयस्याशब्देन छन्दसीष्टका व्यवहृताः । ताश्च बह्वयः तास्वन्तश्चतस्रो मूर्धन्वत्यः विष्टम्भो वय इत्यादिभिर्वयस्वद्भिर्मन्त्रैरुपधेयाः । तत्र यद्यपि मूर्धावयः प्रजापतिछन्द इत्यस्मिन्नन्तिम एव मन्त्रे मूर्धन्शब्दोऽस्ति तथापि तत्साहचर्याद्विष्टम्भोवय इत्यादयश्चत्वारोऽपि मन्त्रा मूर्द्धशब्दवन्त उच्यन्ते छत्रिणो गच्छन्तीतिवत् अत एव तदुपधेयेष्टकासु

मूर्धन्वतीरिति बहुवचनम् । वयस्यास्विति किम् । अग्ने यशस्विन्यशसे समर्थय । अयं मूर्धा परमेष्ठितिकेवलमूर्धशब्दवता वयशब्दरहितेन मन्त्रेणोपधेयासु मा भूत् । गायत्रीः पुरस्तादुपदधाति तेजो वै गायत्री । तेज एव मुखतो धत्ते । मूर्धन्वतीर्भवन्तीति श्रूयते । तत्र उपधानमन्त्रेष्वग्निर्मूर्धाभुवइत्यादिषु वयःशब्दाभावात्कथमस्य सूत्रस्य प्रवृत्तिरिति चेत्, अत्राह । प्रथममतुबन्त एवासाविष्टकास्वौपचारिकः सृष्टिप्राणभृदादिवत् । एतावान्परं भेदः । सृष्ट्यादावेकस्यापि मतुपो विरहाल्लक्षितलक्षणा इह तु लक्षणामात्रमिति । अत्रेदमवधेयम् । सूत्रे वयस्यास्वितिप्रयोगोऽपि लाक्षणिकः । वयस्याशब्देन छन्दसि व्यवहृतास्वित्यर्थात् । यद्वा । छन्दोवत्सूत्राणीति भाष्यकारेष्टेरयमेव ज्ञापकः । अथवा सामान्यापेक्षं ज्ञापकम् । छान्दसा अपि क्वचिद्भाषायां प्रयुञ्जत इति । तेन तुरासाहं पुरोधाय । अनुपस्थितपरिपंथिभिः पार्थिवैरित्यादि सिद्धम् ।

मत्वर्थे मासतन्वोः ॥ १२७ ॥

यत्स्यात् छन्दसि । नभोऽभ्रम् तदस्यास्मिन्निति नभस्यो मासः । तपस्यः । मधव्यः । ओजस्या तनुः । मासतन्वोः किम् । स्वध्वरासो मधुमन्तो अग्नयः । अत्र वार्त्तिकद्वयम् । मासतन्वोरनन्तरार्थे वा । लुगकारेकाररेफाश्चेति । वाशब्दश्चार्थे । मधव्स्मिन्ननन्तरमस्ति मधव्यो मासः । लुक् । मधुः । तपः । नभः । तपोनभसोः क्लीबत्वं छान्दसम् । अकार । इषः । ऊर्जः । इष्यमाणत्वादिट् अन्नम् । ऊर्ग् बलम् । तद्वानित्यर्थः । इकारः । शोचनं शुक् । सास्मिन्नस्ति शुचिः । रेफः । शुक्रः । अयस्मयादित्वाज्जभत्वं न ।

मघोर्ज्ञ च ॥ १२६ ॥

चाद्यत् । पक्षे औपसंख्यानिको लुक् । माधवः । मध-व्यः मधुः । तन्वो मधव्याः । माधवा तनूः । इह छन्दा धिकारे लुगादीनां विधानाद्भाषायां कथमिति चेत् । अव्यु-त्पन्ना एव तत्र नभःप्रभृतयः । यद्वा । इषऊर्जे इत्यर्श-आद्यच् । शोचेतरन्तर्भावितरायर्थादौणादिक इप्रत्यये शुचिः शोचयति प्राणिन इति कृत्वा । नभःप्रभृतीनां अभेदोपचारा-न्मासे वृत्तिः । नभस्यप्रभृतयस्तु तत्र साधुरिति यदन्ताः । मधुयोगान्मासो मधुः । तस्यैव प्रज्ञादिपाठादणि माधवः ।

ओजसोऽहनि यत्खौ ॥ १२७ ॥

ओजःशब्दान्मत्वर्थे यत्खौ स्तः अहनि वाच्ये । ओजस्य-महः । खश्चेति तु न कृतम् । चकारेण संनिहितस्य तस्यानुकर्ष-णाप्रसङ्गात् ।

वेशोयशआदेर्भगाद्यल्खौ ॥ १२८ ॥

वेशोयशःशब्दौ आदी यस्य तादृशाद्भगशब्दान्ताद्यल् ख एतौ स्तः । वेशो बलं तदेव भग इति कर्मधारयः । भगः श्री-काममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यमरः । वेशो भगोऽस्यास्तीति वेशोभग्यः । वेशोभगीनः । यशोभाग्यः । यशोभगीनः । यथा-संख्यं तु स्वरितत्वाभावान्नेति यथासंख्यसूत्रे भाष्ये स्थितम् । वृत्तिकृत्तु यल् खचेति सूत्रं व्यभजत् ।

पूर्वैः कृतमिनयौ च ॥ १२९ ॥

मत्वर्थ इति निवृत्तम् । पूर्वशब्दात्तृतीयाबहुवचनान्तात्कृ-

तमित्यर्थे इनयौ स्तः चात्ख इति वृत्तिकाराः। यल् तु नानुवर्तत इत्येतदपि हि योगविभागफलं तैरुक्तम्। यल्खावित्येकयोग इति भाष्यपक्षे तु यलप्यनुवर्तते। यदि वेदे लित्स्वरो नास्तीत्यत्र प्रमाणमस्ति तर्ह्येकदेशानुवृत्तिरस्तु किंत्वेतत्तत्त्वं सर्वशाखादर्शां महर्षीणामेव दृग्गोचरो नतु योगजधर्मरहितानामपि। गाम्भीरेभिः पथिभिः पूर्विणेभिः। यतेपन्था सचितः पूर्व्यासः। पूर्वीणाः। अद्भिः संस्कृतमित्यर्थः।

सहस्रेण संमितौ घः॥ १३०॥

'समित इति पाठान्तरम्। उभयथापि तुल्य इत्येवार्थः। सहस्रियासो अपां नोर्मयः। सहस्रेण तुल्या इत्यर्थः।

मतौ च॥ १३१॥

सहस्रशब्दान्मत्वर्थे घः स्यात्। तपःसहस्राभ्यां विनिनी इत्यस्यापवादः। सहस्रमस्यास्ति सहस्रियः।

सोममर्हति यः॥ १३२॥

सोम्यो ब्राह्मणः। यज्ञार्ह इत्यर्थः। कथं तर्हि प्रीताऽस्मि ते सोम्य चिराय जीवेति रघुः। छन्दोधिकारात्। उच्यते। सोमः कर्पूरचन्द्रयोः। सोम इव सोम्यः। शाखादित्वाद्यः। सोमे साधुः तत्र साधुरिति यद्वा। सौम्येत्यादिवृद्धिपाठे चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्।

मये च॥ १३३॥

सोमशब्दाद्यः स्यान्मयडर्थे। आगतविकारावयवप्रकृता मयडर्थाः। तथा च सूत्राणि। हेतुमनुष्येभ्योऽन्यतरस्यां

रूप्यः । मयट् च मयड् वैतयोर्भाषायामभक्ष्याछादनयोः । तत्प्रकृतवचने मयडिति । तेन यथायोगं पञ्चमीषष्ठीप्रथमाः समर्थविभक्तयः । सोम्यं मधु । सोममयमित्यर्थः ।

मधोः ॥ १३४ ॥

य इति निवृत्तम् । मधुशब्दान्मयडर्थे यत् स्यात् । मधव्यान् । मधुमयानित्यर्थः ।

वसोः समूहे च ॥ १३५ ॥

चान्मयडर्थे । यथायोगं समर्थविभक्तिः । वसोरितियोगविभागात्स्वार्थेऽपि यत् । अग्निरीशे वसव्यस्य । हस्तौ पृणस्व बहुभिर्वसव्यैः । पृणातिः पूरणकर्मा । अक्षरसमूहे छन्दस उपसंख्यानम् । ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । येयजामाह इति पञ्चाक्षरम् । यजेति द्व्यक्षरम् । द्व्यक्षरं वषट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः । सप्तदशाक्षरात्मकश्छन्दस्योऽक्षरसमूहः प्रजापतिः । प्रजापतिना दृष्ट इत्यर्थः । छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यत्प्रत्ययः ।

नक्षत्राद् घः ॥ १३६ ॥

स्वार्थे । नक्षत्रियेभ्यः स्वाहा ।

सर्वदेवात्तातिल् ॥ १३७ ॥

आभ्यां तातिल् स्यात्स्वार्थे छन्दसि । सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिदेवतातिमुराणः ।

शिवशमरिष्टस्य करे ॥ १३८ ॥

करोतीति करः पचाद्यच् । कृद्योगलक्षणा कर्मणि षष्ठीह समर्थविभक्तिः । शिवं करोति शिवतातिः । याभिः शन्ताती भवथो ददाशुष अथो अरिष्टतातये । भाषायां शिवतातिप्रभृतीनां प्रयोगश्चिन्त्यः ।

भावे च ॥ १३९ ॥

शिवादिभ्यो भावे तातिल् स्याच्छन्दसि । शिवस्य भावः शिवतातिः । शन्तातिः । अरिष्टतातिः । यतोऽधिकारः समाप्तश्छन्दसीत्यस्य च ॥

इति पदवाक्यप्रमाणपारावारपारीणस्य श्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन कृते शब्दकौस्तुभे चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादः समाप्तोऽध्यायश्च ॥

